# विषयानुक्रमः

# सुभाषित-विषय-सूची।

॥ ॐ अर्हम् ॥

श्रीखरतरगणावतंसकमहाकविश्रीजयानन्दसूरिविरचितम्

# श्रीधन्यचरित्रम् ( पद्यम् )

॥ श्रीश्रुतदेव्यै नमः ॥

श्रेयोलतामण्डनमण्डपश्री-शाखाचतुर्दिक्परिपूरिताशः । श्रीआदिदेवप्रथितप्ररूढि-र्भूयात् फलद्धर्यै जिनधर्मवृक्षः ॥ १ ॥ यथा सुरेषु स्वर्गिवरो गरीयान्, यथाऽद्रिषु स्वर्णगिरिर्गरिष्ठः । यथाऽब्धिषु क्षीरपयोधिरिष्ट-स्तथा पुमर्थेषु चतुर्षु धर्मः ॥ २ ॥ धर्मेण लक्ष्मी-रसमा समेति, धर्मेण सम्पत्सुखमप्यखर्वम् । धर्मेण मोक्षोऽपि भवेदनन्तो, यतोऽस्ति धर्मोऽत्र जयस्ततोऽपि ॥३॥ स धर्म एष प्रथितश्चतुर्धा, जिनेश्वरैर्भास्वरगीर्भिरेभिः । सदानशीलोग्रतपःसुभावः, प्रभावसम्भावितभाविभद्रः ॥ ४ ॥ तत्रापि दानं प्रथमं प्रथीयः, प्रदिष्टमुत्कृष्टफलप्रदायि । येनाऽऽदिदानेन मुनौ सुपात्रे-ऽजनिष्ट धन्योऽद्भुतशालिभद्रः ॥५॥ ध्यात्वा परं ज्योतिरनन्तहेतुं, प्रणम्य सम्यग् जिनवर्धमानम् । गिरां प्रभावाद् गुरुगौतमस्य, ब्रुवेऽत्र धन्यस्य कथाप्रबन्धम् ॥६॥ धन्यः स पुण्यैरतुलो गुणौघै-रहं तु किञ्चिज्ज्ञतया

समेतः । तद्दानधर्मातिशयात् तथापि, स्ववाग्विशुद्ध्यै किमपि ब्रुवेऽतः ॥७॥ यः पात्रदाने रसिकः स्वशक्त्या, स सौख्यपात्रं हि यथा
स धन्यः । पश्चाच्च तापेन सुदुःखितः स्यु-र्धन्याग्रजा दानकृतोऽपि यद्वत् ॥ ८ ॥
तथाहि महिमव्यूह-सुप्रतिष्ठाप्रतिष्ठितम् । प्रतिष्ठानपुरं स्वरित, स्वरितसुरथं महर्द्धिमत् ॥ ९ ॥ यत्र दुर्गं परैर्दुर्गं, खातिका
परघातिका । वनानि परितः सन्ति, नन्दनानीव सत्फलैः ॥१०॥ चैत्यैरभ्रंलिहैः शुभ्रैः, पताकापक्षपक्ष्मलैः । यत् पुरं राजते राज-
हंसैरिव सरोवरम् ॥ ११ ॥ यत्र दानी जनो नागो, याचकालिप्रमोददः । दारिद्र्यं गहनं भिन्ते, हस्तविस्तारकारकः ॥ १२ ॥
लक्ष्यभेदोल्लसद्बाण-गुणचिन्ताविचारवित् । राज्ञि देवे च सर्वज्ञे, विजयी धार्मिको जनः ॥ १३ ॥ इत्याद्यनेकसच्छेक-सुविवेक-
निकेतनम् । स्वर्भूर्भुवस्त्रयीसार-शोभाप्राग्भारभासुरम् ॥ १४ ॥ जितशत्रुर्नृपस्तत्र, नामतः परिणामतः । न्यायवल्लीवनाम्भोद-
सोदरः सुन्दरः श्रिया ॥ १५ ॥ यद्भुजस्तम्भसम्बद्धा, जयश्रीर्हस्तिनीसमा । नान्यतो याति कुत्रापि, विचित्रेऽपि नृपाङ्गणे
॥ १६ ॥ यत्प्रतापसहस्रांशु-श्चित्रं समुदितो रणे । रात्रौ दिवाऽपि विद्वेषि-ध्वान्तविध्वंसमातनोत् ॥ १७ ॥
पुरा श्रिया श्रितं देवा-न्निःश्रीकं संश्रितं ह्रिया । कुतश्चिन्नगरादागात्, तद् द्रङ्गं कुलमेककम् ॥ १८ ॥ सिंहः सत्पुरुषः
श्ये(स्वे)न, यत्रेयात् तत्र चार्थति । काकः कपोतः कुपुमान्, जन्मभूमिं न मुञ्चति ॥ १९ ॥ तत्कुटुम्बनरा नार्यः, कर्म कृत्वाऽन्य-
वेश्मसु । आजीविकां प्रकुर्वन्ति, निर्वहन्ति यथा तथा ॥२०॥ तत्रैको दारकः सार-श्चारदाता विनीतधीः । स्वभावेन गुणोदात्त-
चित्तो मातुः प्रियङ्करः ॥ २१ ॥ जनन्या जनितोत्साहो, महाहितमतिस्ततः । वृत्तये वत्सरूपाणि, चारु चारयति स्वयम् ॥ २२ ॥
एकदा बहिरुद्याने, वत्सचारणकारणात् । निरन्नो निरगाद् गेहात्, प्रातरुत्थाय सत्वरम् ॥ २३ ॥ तदैवोद्यानिकां कर्तुं, लघु-

र्द्धोऽपि पूर्जनः। खान(स्वन्न)-पानसमायुक्तो, वनं यातो भुनक्त्यथ ॥२४॥ तं दृष्ट्वा बालकः सोऽपि, रोपितेहो गृहं ययौ। बुभुक्षुर्मेस्य-मुरकण्ठं, मातरं प्रत्यरं जगौ ॥ २५ ॥ हे मातरद्य सद्यस्कं, परमान्नं सुधासमम्। देहि मे मुदि सम्पाद्य, जेमामि रुचितं यतः ॥२६॥ अद्यपूर्वं त्वया मेऽम्ब !, कम्बलं बिभ्रते(तः) तनौ। सुभोजनप्रदानेन, नैवाऽऽशाऽपूरि भूरिशः ॥ २७ ॥ ततः कुतश्चिदानीय, कमनीय(यं) सुभोजनम्। देहि मे देहि मेऽद्यत्वं, प्राणा अन्नसमाः खलु ॥२८॥ इति श्रुत्वा प्रियालाप-कलापं स्वसुतस्य सा। मनसा स्वौरसस्नेह-गेहदेहल्यभूत् प्रभूः(सूः) ॥२९॥ एतच्च चिन्तयामास, सनिःश्वासमसंशयम्। धिग् दुर्दैवं यतो नैवं, सुतस्याप्युचितं चितम् ॥ ३० ॥ चौरश्चैवल्लुरुः सर्पः, प्राघुणो दुर्जनो भिषक्। वेश्या धूर्त्तो नृपो नैते, परपीडां विजानते ॥३१॥ इति लोकोक्तिरुक्ताऽभूत्, सत्या सत्यापनादिव। न ग्रहं बालको जह्यात्, किं कुर्वे सर्वथा वृथा ? ॥ ३२ ॥ इति श्रुत्वा पुराभूत-सुखस्मृतिकृतेर्दुतम्। माता रुरोद रोदास्पृक्, बालोऽपि खलु बाल्यतः ॥३३॥ श्रुत्वेति प्रीतः(प्राति)वेश्मिक्यो, वाक्यपीयूषचन्द्रिकाः। मिलित्वा प्रीणयामासु-श्चकोरीमिव तां च त ॥ ३४ ॥ दीनं हीनं जनं दृष्ट्वा, यस्य स्याद् हृदये दया। सर्वज्ञोपज्ञसद्धर्म-स्तच्चित्ते वरिवर्त्ति वै ॥ ३५॥ स्वदुःखदुःखितः प्रायः, सर्वो भवति मानवः। परदुःखसुदुःखार्त्तो, विरलस्तु दयालुहृत् ॥३६॥ सा दुःखकारणं ताभिः, पप्रच्छे वत्सलेच्छया। प्रायशः सज्जनोऽन्यस्य, दुःखच्छेदं चिकीर्षति ॥ ३७ ॥ तत्पृष्टेऽथ यथास्पष्टं, तया निजगदे निजम्। मित्रस्वजनवर्गेषु, सत्यमेव वचः श्रिये ॥ ३८ ॥ सत्येन जायते प्रीतिः, प्रतीतिश्चापि सत्यभूः। जाजायते यशःस्फीति-स्तस्मात् सत्यं सतां मतम् ॥ ३९ ॥ सत्यसन्तुष्टचित्ताभि-स्ताभिः सर्वाभिरादरात्। बभाषे सा विशेषेण, स्थेमप्रेमपुरस्सरम् ॥ ४० ॥ हे सख्यः! श्रयतां तावद्, बालको याचते तु माम्। क्षीरान्नं तत् कथं दद्या-मद्य हृद्यं स्वसूनवे ? ॥ ४१ ॥ श्रुत्वेति ताभिः सर्वाभि-र्बभाषे

सा सखी सुखम् । वयं ते पूरयिष्यामः, सुखं सखि ! सुखेप्सितम् ॥ ४२ ॥ इत्युदित्वैकया दुग्धं, तन्दुलौघो द्वितीयया । घृतं त्वपरया खण्डा, चतुर्थ्या प्रमुदा ददे ॥४३॥ त्यक्त्वा खेदं समानीय, सर्वं सर्वस्वसंनिभम् । राद्धमिदं सुधास्वादु, परमान्नं तदा मुदा ॥ ४४ ॥ संस्कृत्य पायसं माता, पुत्रप्रेष्टपुपूर्षया । जहर्ष ह्यनुरप्याशु, राद्धे वर्धापनं यतः ॥ ४५ ॥ विशालस्थालमानीय, संस्थाप्य स्वसुताग्रतः । परिवेष्यापि तन्माता, कार्यायान्यगृहानगात् ॥ ४६॥ रङ्को रत्नं यथा प्राप्य, पिपासुस्तु सरोजलम् । तद्वत् क्षीरान्नमासाद्य, मुमुदे बालकोऽधिकम् ॥४७ ॥ प्राक्तनागण्यपुण्येन, कथञ्चित् कर्मलाघवात् । दित्सा वत्साऽऽशये जाता, बोधिबीजानुबन्धभूः ॥ ४८ ॥ इतश्च कैश्चित् सुकृतैः, प्राक्कृतैस्तस्य मन्दिरे । कश्चिन्मुनिर्महात्माऽऽगा-न्मासक्षपणपारणः ॥ ४९ ॥ तं दृष्ट्वाऽनभ्रवृष्ट्याभं, निष्पुण्यफलवत् फलम् । अवभ्रे सम्भ्रमं बिभ्र-दुत्तस्थौ स तु सम्मुखम् ॥ ५० ॥ भक्तिप्राग्भार-सञ्चार-स्फुरद्रोमाञ्चकञ्चुकः । स त्रिः प्रदक्षिणीकृत्य, तं ननाम स्वकामतः ॥ ५१ ॥ चेतसा चिन्तयामास, धन्योऽहं मद्गृहं महत् । मद्वित्तमुत्तमं चैत[द्], यतोऽसौ सङ्गतो यतिः ॥५२॥ दुर्लभं चित्तमेकस्य, वित्तं चान्यस्य कस्यचित् । चित्तं वित्तं च पात्रं च, धन्यानामेकतो मिलेत् ॥५३॥ ध्यात्वेति ध्यानसंहत्या, त्यागायोत्पन्नवासनः । पाणिभ्यां पायसस्थाल-मालम्ब्येदमवग् वचः ॥५४॥ हे मुने ! समतासिन्धो !, विश्वबन्धो ! दयानिधे ! । विधेहि मयि सौम्यां स्वां, दृष्टिं वृद्धि(ष्टि) सुधाश्रियाम् ॥ ५५ ॥ त्वत्सम्भावितमात्मानं, मन्येऽहं जगदुत्तमम् । सर्वसंसारसारत्व-राज्यलक्ष्म्याः कटाक्षितम् ॥ ५६ ॥ बालोऽप्यहं त्वया दृष्टः, प्रभ-वेयं बलाधिकः । दरिद्रोऽपीन्द्रसाहाय्य-सान्द्रमद्रसुरद्रुमः ॥ ५७ ॥ सद्वित्त-चित्त-पात्राणां, संयोगो युगपन्मम । त्रिवेणीसङ्गमो भूया-न्मनो-वाक्-कायशुद्धये ॥ ५८ ॥ दानं श्रेयस्ततोऽप्यन्न-दानं तत्पायसं पुनः । मुनौ पात्रे सुधा भूयाद्, विशेषाद् वेषत(षितं)

त्वयि ॥ ५९ ॥ मदर्थं निर्मितं मात्रा, मात्राऽधिकधिया तया । गृहाण पायसं साधो !-ऽनुगृहाण घृणाऽनृणो(णम्) ॥६०॥ एतद्दानतः सधो, निर्निदानमना नु माम् । पवित्रय जगन्मान्य !, रत्नत्रयमयाऽऽत्मना ॥६१॥ त्वं मे माता पिता त्वं मे, बान्धवस्त्वं धवोऽधुना । त्वं स्वामी शिवशंगामी, तत्प्रसादादतस्त्व धत्स्व माम् ॥ ६२ ॥ इत्युदित्वा ददानेऽस्मिन् , श्वेददाने स्मितस्पृहम् । मुनिः स्वमिव सत्पात्रं, सत्पात्रं समदीधरत् ॥ ६३ ॥ धन्यंमन्यस्त्वसौ बालो-ऽनालोचितमतिस्थितिः । परमान्नं मुनौ भक्त्या, परमानन्दतो ददौ ॥ ६४ ॥ तस्मिन् ददति तद्दानं, मुनौ पात्रोत्तमे तदा । देवा न ववृषुः स्वर्णं, तदद्भुतकृते भृशम् ॥ ६५ ॥ तदा तस्मिन् भवे यत्र, बालो लेभे फलाद्भुतम् । तल्लोके विश्रुता जाता, धर्मो धीर इति श्रुतिः ॥ ६६ ॥ विहृत्य निर्गते गेहा-न्मुनावन्वगमत् शकः । मन्वानः सफलं जन्म, तन्महामुनिदानतः ॥ ६७ ॥ तद्दानावसरे सारे, भावोदारे स चेतसि । महोत्तममनुष्यायु-र्निबबन्ध प्रबन्धतः ॥ ६८ ॥ गाम्भीर्यं सर्वतः शस्यं, सर्वभावेषु भाविनाम् । विशेषतः शुभे दाने, यदधाद् बालकोऽपि सः ॥ ६९ ॥ यदभद् गेहसर्वस्वं, परमान्नं सुधोपमम् । तद् दत्त्वाऽपि दधौ चित्ते, यथा कोऽपि विवेद न ॥ ७० ॥ कश्चिद् दत्त्वा समर्थोऽपि, किञ्चिद् वक्ति भूर्श जने । कोऽपि दत्त्वा महाभागो, न तद् वक्ति मनागपि ॥ ७१ ॥ एवं दत्त्वाऽपि गाम्भीर्या-दाऽऽचख्यौ मातुरप्ययम् । ततः सम्मान्यते भव्यै-र्धर्मश्छद्मो महाश्रिये ॥ ७२ ॥ समागत्य पुनर्मात्रा, परिवेषितपायसम् । प्रायशो बुभुजे स्निग्ध-मुग्धमुग्धमतिर्यतः ॥ ७३ ॥ गुरु-देव-पितृ-स्निग्ध-वृद्ध-ग्लानाघनेषु च । दत्त्वा यद् भुज्यते भुक्तं, तच्छेषमुदरे भृतिः ॥ ७४ ॥ तस्मिन्नेव दिने सायं, वत्सरूपाणि चारयन् । बहिर्दृष्ट्वा मुनिं स्पष्ट-मुपविष्टस्तदन्तिके ॥ ७५ ॥ धर्मं चतुर्विधं शुद्धं, मुनिनाऽऽदिष्टमिष्टवत् । प्रीत्या शुश्राव विभात्ताः, फलापीनाब्दगर्जितम् ॥ ७६ ॥ वत्सपालस्तदाऽऽकर्ण्य, धर्मकर्मोपदेशमिदम् । योगीन्द्र परमानन्द-कन्दोऽभवा-

न्मुदोऽभवत् ॥ ७७ ॥ दध्यौ च हृदये धर्मः, शर्महेतुरकृत्रिमः। विश्वबन्धुरहो! धर्मो, धर्मः कल्याणवल्लिभूः ॥ ७८ ॥ भवितव्य-नियोगेन, तदायुः क्षतिमागतम्। विसूचिकावशादाप, परलोकमतर्कितम् ॥ ७९ ॥ यस्मिन् देशे च काले च, यत्र योनि-वयो-द्वये। जीवैर्बद्धं हि यत् कर्म, प्रायस्तत् तत्र भुज्यते ॥ ८० ॥ इत्येवमेव सुकृतं समुपार्ज्य वर्यैः, सद्भावदानप्रशतः स्ववशस्वभावः। तद्गोरमन्दिरमुपेक्ष्य समक्षमक्षैः, पुण्येन सोऽत्र विदधे सविधे समृद्धेः ॥ ८१ ॥ तस्मिन् क्षणे तदत्युग्र-पुण्यनैपुण्यभूपतिः। सुप्रसन्नस्तनोति स्म, विस्मयस्मेरिणीं दशाम् ॥ ८२ ॥ यो दानपुण्यनैपुण्यं, बालोऽपि बुधवद् दधौ। निर्धनोऽपि धनीवाभूद् दानाद् धन्यो मुदेऽस्तु सः ॥ ८३ ॥ तद्दानपुण्यवशतः शिशुरेष वेष-वित्तादिभिर्विरहितोऽपि हितोपयोगी। यत् प्राप्स्यतीप्सितसुखं सुषमाविशेषात्, तत् प्रोच्यते समुचितं जिनधर्मयोग्यम् ।'८४॥ इति धन्यमहापुण्य-नररत्नशिरोमणेः। जिनधर्मजयानन्दः, प्रस्तावः प्रथमोऽजनि॥८५॥

इति श्रीधन्यदानचरिते पूर्वभवपरमान्नदानपुण्यार्जनः प्रथमः प्रस्तावः ॥ १ ॥

## अथ द्वितीयः प्रस्तावः।

अथान्नदानोन्नतपुण्ययोगात्, समर्जितोदात्तकुलोपयोगात्। स बालजीवोऽवततार यत्र, यथास्वरूपस्तदिहोद्यतेऽदः ॥ १ ॥ दानाद् भवेज्जन्म कुलेष्वरोगं, सौभाग्यभाग्योन्नतिलाभयोग्यम्। रूपं सुसंयोगफलं यशश्च, सद्बोधिसिद्धिश्च जयो वशश्च ॥ २ ॥ तत्रैव नगरे लक्ष्मी-लीलापुण्याढ्यनागरे। धनसाराभिधः श्रेष्ठी, ज्येष्ठोऽस्ति वणिजां वरः ॥ ३ ॥ लक्ष्मीर्वसति वाणिज्ये, सर्वतो व्यवहारिणाम्। मत्वेति यस्तदेवाधाद् बहुधोत्तक्रयाणकैः ॥ ४ ॥ राजहंसीव सत्पक्षा, सन्मानसनिवासिनी। प्रिया शीलम(व)ती तस्य, नामतः परिणामतः ॥ ५ ॥ या देव-गुरु-बन्धूनां, भक्त्या पतिमनोऽनुगा। सर्वकार्यकरी गेहे, सा श्री श्रीरिव शस्यते ॥ ६ ॥

एतादृक् श्रेष्ठि–श्रेष्ठिन्यो–र्गृहवासं वितन्वतोः। प्रयाति सुखतः कालः, परस्परमुपेतयोः ॥ ७ ॥ पुरा पुत्रत्रयं जज्ञे, यथानुक्रमनामवत्। स्वस्वभावसमायुक्त–प्रागुपात्तात्मकर्मवत् ॥ ८ ॥ धनदत्ताभिधः पूर्वो, धनदेवो द्वितीयकः। तृतीयो धनचन्द्रश्च, प्रायशः सदृशाश्च ते ॥ ९ ॥ विनयादिगुणोदीर्णा–स्तत्पत्न्योऽपि क्रमादिमाः। धनश्रीर्धनदेवी च, धनचन्द्रा तथाऽपरा ॥ १० ॥ पितृमातृसहग्-भ्रातृ–भ्रातृजायाद्यकुटुम्बके। शालिवत्यां सुतत्वेन, स जीवोऽप्युदपद्यत ॥ ११ ॥ तस्मिन् गर्भे समुत्पन्ने, बहुपुण्ये पुराऽर्जितात्। शुभस्वप्नप्रपञ्चेन, माता सन्तोषिता बभौ ॥१२॥ सन्निधेः सन्निधेर्धात्री, यथा दृष्टाऽपि तुष्यते। सद्गर्भवत्यभून्माता, साताख्याता-ऽन्नदीप्तितः ॥ १३ ॥ यस्मिन् दिने प्रियाकुक्षौ, गर्भत्वे सोऽवतीर्णवान्। तद्दिनात् स धनैः श्रेष्ठी, ववृधे चाब्धिवद् विधोः ॥ १४ ॥ यथा कल्पतरोर्बीजं, वर्धते नन्दनावनौ। तथाऽसौ वर्धते गर्भे, मातुर्वाञ्छितवत्सलः ॥ १५ ॥ यथाऽङ्ककरण्डस्थे, दीपे गेहं प्रदीप्यते। मातृगर्भस्थिते तस्मिन्, गृहं जाताऽप्यदीप्यत ॥ १६ ॥ दोहदा दानपुण्याद्यौ, बभूवुर्मातुरुत्तराः। ते सर्वे पूरिताः पित्रा, मित्रायितमनोरथैः ॥ १७ ॥ गर्भमासान् नवातीत्य, ससार्धाष्टमरात्रिकान्। सुप्रशस्ते दिने वार–धिष्ण्य–योगबलाधिके ॥ १८ ॥ लग्ने ग्रहबलोपेते, केन्द्रगे गुरुभार्गवे। रोहणाद्रिक्षमेवाम्बा सुतरत्नमजीजनत् ॥ १९ ॥ शुभलक्षणसम्पूर्णो, रूपलावण्यपुण्यवान्। दीप्तिमानद्भुताकारः, पुत्रो जातः पितुः श्रिये ॥ २० ॥ तज्जन्मनि प्रशस्तानि, निमित्तान्यभवंस्तदा। हर्षप्रकर्षियोषित्कं, सञ्जातं सूतिकागृहम् ॥२१॥ निधीयमाने तन्नाले, भूमावाचारकारणात्। निःससार महःसार–मणिनिधी रसास्तना(तला)त् ॥ २२ ॥ तं निधिं तमिवावाप्य, धात्र्या निर्गतग्रतः। धन्यो धन्योऽयमद्यैव, यो धनेन सहाजनि ॥ २३ ॥ सुत–शेवधिसम्प्राप्ति–हृष्टचित्ता मिथोऽङ्गनाः। धन्यनामेति निर्णीय, जगुस्तं कुलयोषितः ॥ २४ ॥ त्रिभिर्विशेषकम् ॥ अन्योऽपि प्रीतिमाँल्लोकः, कुल-

जस्वजनादिकः। चकार सारत्नाम्ना, वर्धापनमहोत्सवम् ॥ २५ ॥ निर्वे(र्व)र्त्य सूतकं रीत्या, द्वादशाहे महामहे। पित्राऽपि तस्य तन्नाम, सु(स)कुटुम्बमदीयत ॥२६॥ तस्य जन्मोत्सवाद्यास्तु, पितृभ्यां विहिता हिताः। तदाऽकस्माद् धनप्राप्ति-स्तद्भाग्यादभवद् ध्रुवः ॥ २७ ॥ शुक्लपक्षद्वितीयेन्दुः, कलाभिर्विवर्धते यथा। सुखस्थः शङ्करप्रेयान्, सल्लक्षणविचक्षणः ॥ २८ ॥ सचकोरहृदामोदी, सन्वन् कुवलयश्रियम्। धिष्ण्यराजिष्णुराशायुत, स धन्योऽपि तथोच्चकैः ॥ २९ ॥ युग्मम् ॥ स्नेहपानीयसंसिक्तः, सच्छायोपायतन्मयः। शाखीव वर्धते धन्यः, सार्धं पितृमनोरथैः ॥३०॥ क्षौरकर्मादिका जात-क्रियाश्चाचारहेतवः। ताः सर्वास्तस्य पितृभ्यां, विहिताः सन्महोत्सवाः ॥ ३१ ॥ अथ पञ्चाब्ददेशीयो, विद्यादानार्थमर्थतः। शालायां पण्डितस्यायं, पितृभ्यां विनिवेशितः ॥ ३२ ॥ विनयाद् विद्याः सङ्ग्राह्याः, पुष्कलाद् धनतोऽपि च। विद्यया वा पुनर्विद्या-स्त्रयमेतत् तदङ्गतः ॥३३॥ गणिताद्याः कलाः सर्वा बुद्धिसर्वस्वभूमिकाः। द्वासप्ततिरपि स्पष्ट-मधीतास्तेन धीमता ॥ ३४ ॥ विद्याश्चतुर्दश श्रेष्ठाः, षडङ्गाद्या यथाक्रमम्। पठितास्ता अपि प्राज्य-विनयात् सुगुरोर्मुखात् ॥ ३५ ॥ यत्र पुण्यं हि तत्र श्री-र्यत्र श्रीस्तत्र धीरपि। यत्र धीस्तत्र युक्ता ह्री-र्यत्र ह्रीस्तत्र नीरपि ॥ ३६ ॥ यत्र नीस्तत्र वागीशा, यत्र वाक् तत्र सा धृतिः। यत्र श्रेयश्च तत्रैव, गुणाः सर्वे विसृत्वराः ॥३७॥ एवं च भणनात् तस्मिँ-ल्लक्षणानि गुणाः पुनः। सङ्क्रान्ताः पूर्वपुण्यत्वात्, पदार्था मुकुरे यथा ॥ ३८ ॥ त्रिभिर्विशेषकम् ॥ स यदाऽभ्यासविद्योऽभूत्, सकलः कमलालयः। यौवनेनाप्यलङ्चक्रे, शक्रेणैरावणो यथा ॥ ३९ ॥ रूप-लावण्य-धन्यात्मा, संश्रितो यौवनश्रिया। ख्यतः सौभाग्यलक्ष्म्याऽपि, सर्वैः पुण्यास्पदेच्छुधीः ॥ ४० ॥ पितृभ्यां स्वजनैर्मेने, स गुणैर्विनयादिभिः। एकेनापि गुणेनाङ्गी, प्रायः सर्वत्र पूज्यते ॥ ४१ ॥ निष्केवलं गुणा एव, परेष्वपि विजित्वराः। किं पुनर्विनयेनाऽऽत्ताः, शूरा वा गुण-

चक्रिणा ॥ ४२ ॥ आदृत्येति पितृभ्यां स, सत्यग्रेऽपि सुतत्रये । विशेषात् स्वात्मवत् प्रेष्ठः, गुणा मानप्रदाः खलु ॥ ४३ ॥ गुरुत्वं च लघुत्वं च, नास्ति मानत्वतत्त्वदम् । गुणी लघुरपि श्रेष्ठो, ज्येष्ठोऽपि विगुणो लघुः ॥ ४४ ॥ इति स्थितिमते सर्व-कुटुम्बे वर्द्धितावहे । पित्रोरपि सतोरेतद्-बान्धवा द्वेषिणोऽभवन् ॥ ४५ ॥ एकदा पितरावूचुः, प्रचुरेर्ष्यास्तदग्रजाः । समाने सति पुत्रत्वे, किमेष बहु मन्यते ? ॥४६॥ प्रायः पुत्राः समाः सर्वे, पितृणां हितहेतुतः । अङ्गजत्वाद् भृतत्वाच्च, पोषणादिविशेषणात् ॥ ४७ ॥ एकोदरत्वे तुल्यस्य, लघोरपि सतोऽस्य तु । अत्यादरपुरस्कारः, क्रियते किमु कामतः ? ॥ ४८ ॥ युग्मम् ॥ इति त्रयाणां पुत्राणां, तेषां धन्याग्रजन्मनाम् । निर्न्याय्यं वाक्यमाशङ्क्य, जगतुः पितरावथ ॥ ४९ ॥ हे त्रय[ः] पुत्रकाश्चात्र, निस्त्रपा निर्गुणाः किमु ? । यूथ यूथपरिभ्रष्ट-गजवद् भञ्जितक्रमम् ॥५०॥ गुणाः सर्वत्र पूज्यन्ते, न वृद्धत्वं न सत्कुलम् । अप्यरण्यजा मजास्त्याज्या ग्राह्याः सुमनसो वनात् ॥ ५१ ॥ गृहजोऽपि रजःपुञ्जः, क्षिप्यते निर्गुणो बहिः । बहिर्भूर्भवने नेया, खानेर्मृत्स्ना-ऽपि मङ्गला ॥ ५२ ॥ न कोऽपि वल्लभः कायः(र्यै)-प्रायः स्वार्थपरे जने । गुणवान् वल्लभः सोऽपि, सर्वत्र निजकार्यकृत् ॥ ५३ ॥ निष्कुलोऽपि तयोग्रोऽपि, विरूपाक्षोऽपि भैरवः । रुद्रोऽपि गुणतः पूज्यः, किं पुनस्त्वेष सत्कुलः ? ॥ ५४ ॥ तस्मात् त्वावां गुणानस्य, पूजयावः परेऽपि च । ततो न कार्यो युष्माभि-र्गुणद्वेषोऽस्य सोदरैः ॥ ५५ ॥ एवं च न्यत्कृता युक्तया, पितृभ्यां तेऽग्रजाधमाः । पुनः किमपि प्रत्यूचु-र्वाचाटास्तादृशाः खलु ॥ ५६ ॥ यद्येवं भवतोरस्मि[न्] निर्बन्ध[ः] स्नेहबन्धुरः । परीक्षा क्रियतां तर्हि, यद्धि सर्वत्र सम्मतम् ॥ ५७ ॥ गजोऽपि चतुरङ्गोऽपि, पत्तिश्चापि रथस्तथा । मणि-स्वर्णादिकः सर्वः, पदार्थः सुपरीक्षितः ॥ ५८ ॥ परीक्ष्यमाणा ये दक्षैः, क्षमन्तेऽत्र परीक्षितम् । ते तु सन्तः सतां मान्या धन्या हि सुपरीक्षिताः ॥ ५९ ॥

इति तेषां वचः श्रुत्वा, युक्तिव्यक्तिमुपस्थितम् । किञ्चिद् विमृश्य पितृभ्यां, यत् कृतं तन्निरूप्यते ॥ ६० ॥
द्वात्रिंशद् रूपका भाग्य–लक्षणश्रीनिरूपकाः । तेभ्यस्ताभ्यां तु पितृभ्यां, वाणिज्याय धियाऽर्पिताः ॥ ६१ ॥
लाभं नौ दर्शयध्वं भोः !, इत्युक्त्वा प्रेषिताः सुताः ॥ ६२ ॥
पृथक् पृथग् दिशो गत्वा, कृत्वा च क्रयविक्रयम् । व्यवहर्तुमथो लग्ना व्यवहारो हि कामधुक् ॥ ६३ ॥ धन्योऽपि द्रव्यमासाद्य,
परीक्षाद्रव्यमादत्वा–ऽऽगत्य स्थानं प्र(य)थेप्सितम् । प्राक् सजीवं क्रयाणं हि, श्रिये क्रेयं वणिक्सुतैः ।
तन्मात्रं पितुरन्तिकात् । जगामोद्दामधी राज–मार्गं वर्गोत्तमोद्यमः ॥ ६४ ॥ लात्वा तं यावदायातो, राजमार्गं समग्रमुत् । राजपुत्रस्ततः कोऽपि, समा-
मत्वेति मेण्ढकं प्रौढं, जग्राहाग्र्यगुणग्रहः ॥ ६५ ॥ धन्यस्य मेण्ढकं दृष्ट्वा, राजपुत्रस्तमब्रवीत् । योध्येते युद्धितो मेण्ढौ, परस्परजिगीषया ॥ ६७ ॥
यातः समेण्ढकः ॥ ६६ ॥ राजमार्गजनान्वक्षं, मेण्ढकौ तावढौकताम् ॥ ६८ ॥ घाताघातप्रपाताय, पृथग् भूत्वा
दीनाराणां सहस्रं हि, पणीकृत्य कृतस्पृहम् । युध्यमानेन धन्यस्य, मेण्ढकेनोढदार्ढ्यतः । राजसूमेण्ढको जिग्ये,
महोद्धतम् । शीर्षाशीर्षि महामर्षं, युयुधाते तु मेण्ढकौ ॥ ६९ ॥ धन्यो जयं च दीनार–सहस्रं लब्धवान् पणम् ॥ ७१ ॥
भाग्यं हि बलवत्तरम् ॥ ७० ॥ राजाङ्गजस्य मेषेऽथ, भग्नदोषे विशेषतः । अन्ये तु भ्रातरो भाग्य–वर्जिता
तल्लात्वोभयमिभ्यात्मा, गृहमागत्य सत्वरम् । ताताय ढौकयामास, सुपुत्रः खलु तादृशः ॥ ७२ ॥ पुनर्द्वितीयवेलायां, त्रयोऽप्या भ्रातरोऽवदन् । भूयः
धन्यनिर्जिताः । अलाभस्वल्पलाभत्वा भाग्ययोग्या हि संम्पदः ॥ ७३ ॥ परीक्षार्थं पुनः किञ्चित्, पर्या-
परीक्षा क्रियतां, श्रेयो द्विस्त्रिः परीक्षितम् ॥ ७४ ॥ पितृभ्यां पूर्वपुत्रोक्त–माकर्ण्याकीर्णनिर्णयम् । द्वितीयस्यां पुनर्भूया–दिष्टार्थप्रथनप्रथः ॥७६ ॥ पुनः
लोचि विचारतः ॥ ७५ ॥ एकस्यां तु परीक्षायां, धन्योऽभूद् धनकामधुक् ।

परीक्षारीक्षार्थं, पुत्रेभ्यो ददिरे वरा । कल्याणमापकाः पत्रिः, पितृभ्यां तुष्टिपुष्टिदाः ॥ ७७ ॥ तदादाय महायास–क्रय-विक्रय-निष्क-यान् । चक्रुस्त्रयोऽपि तेऽस्त्यर्थ-मर्थेच्छा हि नृणां भृशा ॥ ७८ ॥ महोद्यमात् पुनस्तेषां, व्यवहारविहारिणाम् । न कोऽपि लाभः प्रायोऽभूत्, फलं दैववशं खलु ॥ ७९ ॥ धन्योऽथ पुण्यनैपुण्य–बुद्धिसन्निधिसन्निधिः । यल्लाभाय शुभं लेभे, तत्स्वरूपं प्ररूप्यते ॥८०॥ मनःसमाधिमाधाय, विधाय जिनदर्शनम् । प्रणम्य सुगुरूनादौ, स्मृत्वा पञ्चनमस्क्रियाम् ॥८१॥ पित्रोरादेशमासाद्य, निरपत्रपाणविद् । चकृत्वा चतुष्पथे प्रासः, स सर्वं सफलं विधेः ॥८२॥ कस्यां च विपणश्रेणौ, सुपणायाविचक्षणः । चिकीर्षुः क्रयं लाभाय, दृष्टायां समुपाविशत् ॥ ८३ ॥ इतस्तत्राभवद् ग्रामे, तृष्णेच्छो धनमीलने । महाधन्याभिधः श्रेष्ठी, कृपणानां शिरोमणिः ॥ ८४ ॥ तेन हठा महारम्भैः, स्तम्भैर्दुर्गविसर्जनाम् । पापनाऽऽमानने येन, तेन द्रव्यसमर्जनम् ॥८५॥ यथा नन्दोऽभवद् राजा, नन्यद्रव्याद्रिसङ्ग्रही । तथैवास्थित विचौघ–सञ्चयोचितचेतनः ॥ ८६ ॥ रात्रिन्दिवं विना स्वापं, प्रायशो भोजनं विना । त्यक्त्वाऽऽरम्भमग्नो द्रव्य–कोटीकोटीरतो ययौ ॥ ८७ ॥ पापानि कृपणाः कुर्यु–र्वित्तार्थं स्वार्थनिःस्पृहाः । तदर्जितं धिया धीरा वीराः केन भुञ्जते ॥८८॥ स धर्मायापि नो दत्ते, न कर्मण्यपि च शर्मणि । न नर्मणि च नो दीने, हीनेऽधीने च किञ्चन ॥ ८९ ॥ स्वजने सज्जने वाऽपि, नाऽऽश्रये न दवीयसि । दुःस्थे सुस्थे प्रशस्तेऽपि, ग्रासमात्रं न यच्छति ॥ ९० ॥ पुत्रस्यापि न कस्यापि, ज्योतिरिव यथा तथा । किञ्चिन्मात्रं न स प्रायो, दित्सति छद्मपिच्छलः ॥ ९१ ॥ न माता न पिता नेष्टो, बन्धुर्नापि न बन्धुरः । तस्य न कोऽस्त्यरिः, यस्तो द्रविणाद् ऋते ॥ ९२ ॥ नाऽऽत्मा नापि परः कोऽपि, कृपणस्य सुभोज्यभुक् । यो न भुङ्क्ते स्वयं दया–दत्यसे स कथं सुधीः ? ॥९३॥ न वस्त्राणि परीधत्ते, वित्तेप्सुर्वपुषः श्रिये । यैः कृत्वाऽऽलोक्यते लोके, मानसन्मानपूजनम्

॥ ९४ ॥ वार्षिकेऽप्युत्सवे दीपा-ल्यादौ शाल्यादिभोजने। मिष्टान्नमस्य चास्यार्थं, नो विशेदुदरे कदा ॥९५॥ मितम्पचस्य तस्याहो!, सत्यपि द्रविणोच्चये। भोजनाच्छादनेच्छासु, न कदाचिदभूद् वरम् ॥ ९६ ॥ मुखानुकूलताम्बूल-हृदानन्दनचन्दनैः। नाम्नाऽपि नासकौ भेजे, सुविनीतैर्यथा खलः ॥ ९७ ॥ सोऽर्थिभिः प्रार्थ्यमानोऽथ, नामभ्रान्त्या भ्रमभ्रमैः। चोक्षुपीति पतत्रीति, शाशपीति विरीतिमत् ॥ ९८ ॥ चेतसा चिन्तयन् ब्रूते, भ्रूतेजोभञ्जकं वचः। गालिभिर्गालनीयोऽहं, न च याच्यस्तु याचकैः ॥ ९९ ॥ यो मां मुष्टिभिराहन्यात्, स तु मान्यो ममासमम्। न च याचकवाचाऽस्तु, वज्रपातोपमक्रमः ॥ १०० ॥ जातजन्मोत्सवे प्रायो, मार्ग्यमाणः स मार्गणैः। मार्गणैरिव भिन्नात्मा, रोरवीति खरस्वरम् ॥ १०१ ॥ किं बह्वन्यमपि प्रातिवेश्मिकं स्वजनादिकम्। कस्मैचिद् ददतं वीक्ष्य, वीक्षाऽऽपन्नो भवत्यलम् ॥१०२॥ दीने हीने क्वचिद् दीय-माने दाने तु दानिना। शिरोऽर्त्तिर्जायते तस्य, वराकस्यास्य पश्यतः ॥ १०३ ॥ ऐहिकाऽऽमुष्मिकानर्थ-सार्थे निःशङ्कसङ्करः। अशोभलोभसंक्षोभ-स्तोभदौर्भाग्यभोगभृः ॥ १०४ ॥ दाध्येति ध्यानसन्धान-विध्याताध्यात्मचेतनः। तद्धनो निर्धनो वाऽन्ध-स्त्रिसन्ध्यं धनमिद्धधीः ॥१०५॥ युग्मम्। एवं च कुर्वतस्तस्य, तद्धनस्य धनाशया। घने घनेऽपि श्रुद्धत्व-माससादाऽऽपदां पदम् ॥ १०६ ॥ पुत्र-पौत्रादिविद्वेषा-दन्यदा स हृदा न्यदात्। तथा धनं निधीकुर्वे, यथा कोऽपि न विन्दति ॥ १०७ ॥ इति ध्यात्वा स्रुवं खात्वा, कृत्वा गर्त्तं गृहान्तरे। द्रव्येण पूरयामास, रजो नीत्वाऽऽत्मसम्मुखम् ॥१०८॥ यदा तु कृपणो धान्या, विदार्योदरमादरात्। धनं क्षिपति रक्षार्थं, धूलिमात्मसुखं नयन् ॥१०९॥ तदा तद्गर्त्तवृत्तास्यं, प्रसार्यावार्यसम्मदात्। बम्भणीति धनं मेऽदो, धूलिर्वक्त्रे तवास्तु भोः! ॥ ११० ॥ तथाऽन्तःशुषिरो खट्वा-मपट्कुदुचेष्टितः। बभार सारविस्तार-प्रत्नरत्नोऽथ यत्नतः ॥ १११ ॥

गर्त्तामापूर्य यत्नेनो–परि खट्वां निधाय ताम् । तदेकाग्रमनास्तत्र, तस्थावस्थानकस्थितिः ॥ ११२ ॥ तत्पर्यङ्कासनासीनो, मूर्च्छास्त(स्त)मितलोचनः । दाध्याति ध्यानवानेतद्, योगीव परमक्षरम् ॥ ११३ ॥ यदीदृग् निश्चलं चेतो, जन्तोः सन्तोषतो भवेत् । शुभार्थं तत् तदैवाशु, कैवल्यमनलम्बते ॥ ११४ ॥ प्रायोऽन्यस्यापि जीवस्य, द्रव्यादिविषये मनः । यादृशं तादृशं चेत् स्याद्, धर्मे तत् सुलभं शुभम् ॥ ११५ ॥ " न वेत्त्यसौ वराको यद्, धनं यत्नेन रक्षितम् । समं न केनचिद् याति, भवान्तरमुपेयुषा ॥ ११६ ॥ विना भूतस्य दानेन, धनं रक्षानिधायिनः । किंचिन्मात्रमिहामुत्र, नोपयोगाय जायते ॥ ११७ ॥ " स जराजीर्णसर्वाङ्गो, मुमूर्षुर्मूर्खशेखरः । प्राप पापसमायुक्तो, मोहमौढ्यमनूढधृत् ॥ ११८ ॥ समुत्पाटयितुं खट्वां, प्रारेभे क्ष्मां निरीक्षितुम् । तत्पुत्रैर्धनलिप्सायै, दोषमूलं हि सा यतः ॥ ११९ ॥ पाणिभ्यां संस्पृशन् पादौ, पुत्राणां स वदन् मृदु । प्रोचे भो नन्दना ! मेनां, कङ्कृवं खट्वां मदन्यतः ॥ १२० ॥ प्राणेभ्यो वल्लभा यन्मे, खट्वेयं घटते स्फुटम् । ततो न कार्या दूरेण, पितृभक्तैः सुतैरिति ॥ १२१ ॥ पुनरूचे विचार्यान्तः, कृपणः स्वसुतान् प्रति । समयोचितपाथेयं, दद्ध्वं मह्यं सुता ! हितम् ॥ १२२ ॥ ये भवेयुः पितुर्भक्ता, युक्तास्ते नन्दनाः पुनः । शेषास्तूदर–हृद्दारि–कृमिकीटोत्कटाः स्फुटाः ॥ १२३ ॥ श्रुत्वेति पितुरादिष्ट–मिष्टं ते मुदितास्तदा । पुण्यं दातुं पितुः पातुं, स्वाख्यातुं स्वनिवेदितम् ॥ १२४ ॥ ततः स कृपणः प्रोचे, विचिन्त्योचितमाचितम् । कार्यः संस्कारपुंस्कारो–ऽस्थानया खट्वया समम् ॥१२५॥ इत्युक्ते लोभभूमुक्ते, पित्रा सत्रा स्वचेतसा । जहृषुः सुषमं प्रोचु–स्तात ! त्वं निःस्पृहो गृहे ॥ १२६ ॥ सत्यपि स्वापतेयस्य, सारे द्वारे त्वदर्जिते । यदेतदेव देवत्वं, बुभूषुर्याचसे वसु ॥ १२७ ॥ इत्यङ्गीकृतमात्मीय–मुदितं मुदितः पिता । पुनाश्चात्र महामात्र–निर्व्ययामयदानतः ॥ १२८ ॥ प्रायो न कोऽपि कस्यापि, जानात्यान्त-

॥ ९४ ॥ वार्षिकेऽप्युत्सवे दीपा-ल्यादौ शाल्यादिभोजने । मिष्टान्नमस्य गस्यार्थं, नो विवेदुदरे कदा ॥९५ ॥ मितम्पचस्य तस्यासौ !, सत्यपि द्रविणोच्चये । भोजनाच्छादनेच्छासु, न कदाचिदभूद् वरम् ॥ ९६ ॥ मुखानुकूलताम्बूल-हृदानन्दनचन्दनैः । नाम्नाऽपि नासको भेजे, सुविनीतैर्यथा खलः ॥ ९७ ॥ सोऽर्थिभिः प्रार्थ्यमानोऽथ, नामभ्रान्त्या भ्रमभ्रमैः । चोक्रुपीति पतत्रीति, शाशपीति विरीसिमत् ॥ ९८ ॥ चेतसा चिन्तयन् ब्रूते, भ्रूतेजोभञ्जकं वचः । गालिभिर्गालनीयोऽहं, न च याच्यस्तु याचकैः ॥ ९९ ॥ यो मां मुष्टिभिराहन्यात्, स तु मान्यो ममासमम् । न च याचकवाचाऽस्तु, वज्रपातोपमक्रमः ॥ १०० ॥ जातजन्मोत्सवे प्रायो, मार्ग्यमाणः स मार्गणैः । मार्गणैरिव भिन्नात्मा, रोरवीति खरस्वरम् ॥ १०१ ॥ किं बहुन्यमपि प्रातिवेश्मिकं स्वजनादिकम् । कस्मैचिद् ददतं वीक्ष्य, वीक्षाऽऽपन्नो भवत्यलम् ॥१०२ ॥ दीने हीने क्वचिद् दीय-माने दाने तु दानिना । शिरोऽर्त्तिर्जायते तस्य, वराकस्यास्य पश्यतः ॥ १०३ ॥ ऐहिकाऽऽमुष्मिकानर्थ-सार्थे निःशङ्कसङ्करः । अशोभलोमसंक्षोभ-स्तोभदौर्भाग्यभोगभूः ॥ १०४ ॥ दाध्येति ध्यानसन्धान-विध्याताध्यात्मचेतनः । तद्वनो निर्धनो वाऽन्ध-स्त्रिसन्ध्यं धनमिद्धधीः ॥१०५॥ युग्मम् । एवं च कुर्वतस्तस्य, तद्धनस्य धनाशया । धने धनेऽपि वृद्धत्व-मामसादाऽऽपदां पदम् ॥ १०६ ॥ पुत्र-पौत्रादिविद्वेषा-दन्यदा स हृदा न्यदात् । तथा धनं निधीकुर्वे, यथा कोऽपि न विन्दति ॥ १०७ ॥ इति ध्यात्वा स्वयं खात्वा, कृत्वा गर्त्तं गृहान्तरे । द्रव्येण पूरयामास, रजो नीत्वाऽऽत्मसम्मुखम् ॥१०८॥ यदा तु कृपणो धात्र्या, विदार्योदरमादरात् । धनं क्षिपति रक्षार्थं, धूलिमात्ममुखं नयन् ॥१०९॥ तदा तद्गर्त्तवृत्तास्यं, प्रसार्यावार्यसम्मदात् । बम्भणीति धनं मेऽदो, धूलिर्वक्त्रे तवास्तु भोः ! ॥ ११० ॥ तथाऽन्तःशुषिरां खट्वा-मपद्मकदुचेष्टितः । बभार सारविस्तार-प्रत्नरत्नोऽथ पत्नवः ॥ १११ ॥

गर्तामापूर्य यत्नेनो-परि खट्वां निधाय ताम् । तदेकाग्रमनास्तत्र, तस्थावस्थानकस्थितिः ॥ ११२ ॥ तत्पर्यङ्कासनासीनो, मूर्च्छास्त(स्त)मितलोचनः । दाध्याति ध्यानवानेतद्, योगीव परमक्षरम् ॥ ११३ ॥ यदीदृग् निश्चलं चेतो, जन्तोः सत्त्वोपतो भवेत् । शुभार्थं तत् तदैवाशु, कैवल्यमवलम्बते ॥ ११४ ॥ प्रायोऽन्यस्यापि जीवस्य, द्रव्यादिविषये मनः । यादृशं तादृश चेत् स्याद्, धर्मे तत् सुलभं शुभम् ॥ ११५ ॥ " न वेत्त्यसौ वराको यद्, धनं यत्नेन रक्षितम् । समं न केनचिद् याति, भवान्तरमुपेयुषा ॥ ११६ ॥ विना भूतस्य दानेन, धनं रक्षाविधायिनः । किंचिन्मात्रमिहामुत्र, नोपयोगाय जायते ॥ ११७ ॥ " स जराजीर्णसर्वाङ्गो, मुमूर्षुर्मूर्खशेखरः । प्राप पापसभायुक्तो, मोहमौढ्यमनूढधृत् ॥ ११८ ॥ समुत्पाटयितुं खट्वां, प्रारेभे क्ष्मां निरीक्षितुम् । तत्पुनर्धनलिप्सायै, दोषमूलं हि सा यतः ॥ ११९ ॥ पाणिभ्यां संस्पृशन् पादौ, पुत्राणां स वदन् मृदु । प्रोचे भो नन्दना ! मेनां, कुड्ढं खट्वां मदन्यतः ॥ १२० ॥ प्राणेभ्यो वल्लभा यन्मे, खट्वेयं घटते स्फुटम् । ततो न कार्या दूरेण, पितृभक्तैः सुतैरिति ॥ १२१ ॥ पुनरूचे विचार्यान्तः, कृपणः स्वसुतान् प्रति । समयोचितपाथेयं, ददध्वं मह्यं सुता ! हितम् ॥ १२२ ॥ ये भवेयुः पितुर्भक्ता, युक्तास्ते नन्दनाः पुनः । शेषास्तूदर-हृद्वारि-कृमिकीटोत्कटाः स्फुटाः ॥ १२३ ॥ श्रुत्वेति पितुरादिष्ट-मिष्टं ते मुदितास्तदा । पुण्यं दातुं पितुः पातुं, स्वाख्यातुं स्वविचेष्टितम् ॥ १२४ ॥ ततः स कृपणः प्रोचे, विचिन्त्योचितमाचितम् । कार्यः संस्कारपुरस्कारो-ऽस्यानया खट्वया समम् ॥१२५॥ इत्युक्ते लोभमुक्ते, पित्रा सत्रा स्वचेतसा । जहृषुः सुषमं प्रोचु-स्तात ! त्वं निःस्पृहो गृहे ॥ १२६ ॥ सत्यपि स्वापतेयस्य, सारे द्वारे स्वदर्जिते । यदेतदेव देवत्वं, बुभूपुर्याचसे वसु ॥ १२७ ॥ इत्यङ्गीकृतमात्मीय-मुदितं मुदितः पिता । पुत्राश्चात्र महामात्र-निर्णयाभयदानतः ॥ १२८ ॥ प्रायो न कोऽपि कस्यापि, जानात्यान्त-

रमन्तरम् । पितुर्द्वैषैः परः कोऽपि, सुतानां तु परः परः ॥ १२९ ॥ यदा यस्यापि कस्यापि, वाञ्छितं स्याच्छुभाशुभम् । तदा तस्य प्रतिश्रुत्या, श्रुत्या सर्वः प्रमोदते ॥ १३० ॥ यदुक्तं 'मानुषं कूटं, लाकुटं पौल्ल्यमान्तरम् । प्रायो न ज्ञायते' तद्यो–भयं सत्यमभूत् तदा ॥ १३१ ॥ प्रायः कार्यो न विश्वासः, स्वस्यान्यस्यापि कस्यचित् । पिताऽपि तापितस्तादृक्, सुता अप्यमुतादृशाः ॥ १३२ ॥ एवं तत्रासितस्यास्य, कृपणस्यायुषः क्षये । पञ्चत्वमासदन् सद्यः, प्राणाः प्रकुपिता इव ॥ १३३ ॥ स सुतै रत्न-तद्यत्नानभिज्ञैस्तदवज्ञया । खट्वायां चाटितो निन्ये, संस्कर्तुं पितृकाननम् ॥ १३४ ॥ याचितायां तु खट्वायां, श्मशानाधिकृतैरिति । कलिः सङ्कलितः कोऽपि, समं तत्स्वजनैस्तदा ॥ १३५ ॥ तज्जनैरन्तरे भूत्वा, कृत्वा कलिनिषेधनम् । सखेपनाऽर्पिता खट्वा, चण्डालानामनादरम् ॥ १३६ ॥ श्मशानेशेन सा खट्वा, शीर्णा जीर्णेति निर्णयात् । विक्रेतुं विपणिश्रेणि–मानिन्ये धन्यपुण्यतः ॥ १३७ ॥ विशेषाद् यत्र धन्योऽस्ति, स्थितः संक्रयणं चिकीः । तत्रागताऽथ साऽदर्शि, धन्येन बुधबुद्धिना(तः) ॥ १३८ ॥ "यतोऽभ्यासवशा विद्या, लक्ष्मीः पुण्यवशा पुनः । दयादानवशा कीर्ति–र्बुद्धिः कर्मवशा तथा ॥ १३९ ॥" ततो बुद्ध्या तकां खट्वां, दृष्ट्वा स्पृष्ट्वा छटाऽम्भसा । सगर्भेत्यवगत्यान्तः, सलक्ष(क्ष्य)त्वादलक्षयत् ॥ १४० ॥ "तृणवल्ल्यावलिच्छन्नं, घृक्षकक्षादिरक्षितम् । बुद्ध्या पश्यन्ति धीमन्तः, काव्यार्थमिव सद्धनम् ॥ १४१ ॥ चरैः पश्यन्ति राजानः, शास्त्रैः पश्यन्ति पण्डिताः । गावो घ्राणेन पश्यन्ति, धिया पश्यन्ति धीधनाः ॥ १४२ ॥" खट्वेयं विकटा येषा–सारभारवती सती । हर्षप्रकर्षहेतुश्च, ततोऽस्या रत्नभूरिव ॥ १४३ ॥ तथा च धनिनां गेहे, वरतु खट्वाऽऽदि सुन्दरम् । निःसावद्यं च सम्पन्नं, ततोऽप्येषा सुखाय मे ॥ १४४ ॥ इति निश्चित्य तत्कालं, शाली धन्यः कलाफलः । देयं दत्त्वाऽथ तां क्रीत्वा, नीत्वाऽगान्निजमन्दिरम् ॥ १४५ ॥ एकान्तमेत्य निश्चित्य, तत्स्व-

रूपमवेत्य च । योगीव विगतस्वेच्छः, पित्रोरन्तिकमाययौ ॥ १४६ ॥ प्रणम्य प्रणयप्रीत्या, पित्रोः पादौ प्रमोददौ । प्रोक्तं स्वरूप-मेतर्कं, पुरः सर्वमढौकयत् ॥ १४७ ॥ ततः श्रीविश्रुता तेषां, प्रससार रसास्पृशाम् । कीर्त्तिर्धन्यस्य पुण्यस्य, सर्वं भाग्यवतां शुभम् ॥ १४८ ॥ तद्भ्रातॄणां भृशेच्छानां, क्रयं लाभाय चक्रुषाम् । अल्पापलाभसम्पत्ति–र्जाता दुष्कृतदुर्धियाम् ॥१४९॥ यथा(दा) तेषा-मिदं जातं, जहास जनता तदा । 'शुभाशुभेन जन्तूनां, लोकः संवाद्यते खलु' ॥ १५० ॥ पितरौ च कुटुम्बं च, बान्धवा बन्धुरा गिरा । अन्वय–व्यतिरेकाभ्यां, धन्यं तांश्चापि भाषते ॥ १५१ ॥ ततस्तेषामधन्यानां, विषाद–मदमीयुषाम् । मत्सरो हृत्सरो व्याप, पापो धन्येऽपि धीधने ॥ १५२ ॥ "दुर्जनानामियं रीतिः, प्रीतिमत्यपि मत्सरः । गुणागुणविशेषेण, सुजना दुर्जनाः पुनः ॥ १५३ ॥" अतः स्वभावतस्ते तु, मिलित्वा कलिकल्मषाः । मन्त्रयन्ति कुमन्त्रत्वं, धन्यं हन्तुं हतात्मकाः ॥ १५४ ॥ धन्यस्तु वस्तुविज्ञान–दान-वानपि सज्जने । पितृवद् भ्रातृषु स्वेषु, विशेषान्नतिमातनोत् ॥ १५५ ॥ "शीर्षकैः शालिरम्भोदा–स्तोयैश्च फलिनः फलैः । कुलीना विनयोपाधै–र्नमन्ति न भयाद् भुवि ॥ १५६ ॥" इति धन्यगुणोत्कर्ष–वर्षाकालघनाघनः । न प्रीणयति कांस्कांश्च, कलावपि कलापिनः ? ॥ १५७ ॥ तद्गुणग्रहणं श्रुत्वा, विश्वत्रापि विसृत्वरम् । श्रीराजगृहवास्तव्यः, श्रीगोभद्रः स मोदते ॥ १५८ ॥ शालिभद्रानुजां भद्रा–कुक्षिव(वि)न्ध्याद्रिभद्रिकाम् । सुभद्रां नन्दनीं तस्मै, धन्यायादादुदारधीः ॥ १५९ ॥ श्रीमन्महोत्सवेनाथ, सार्थवाहसुतां हि ताम् । परिणीयानणीयःश्री–धन्यो मान्योऽभवद् भुवाम् ॥ १६० ॥ "नूनं स्वसदृशे जाते, संयोगे दम्पतीपदे । पोस्फू-र्जन्ते गुणा वृक्षा, जलसिक्ता इवाधिकम् ॥ १६१ ॥ वरा वधूर्भवेत् क्वापि, वरः क्वापि गुणैर्वरः । वधू-वरं द्वयं योग्यं, जायतेऽगण्यपुण्यतः ॥ १६२ ॥" बान्धवास्तु त्रयोऽप्यग्र(ग्र्या) मत्सरोच्छे(त्से)कपिच्छलाः । चिन्तयन्त्यन्यथा धन्ये, विधातुमसमञ्जसम् ॥ १६३ ॥

तत् क्षुद्रालोचनं स्नेह–मोचनं समवेत्य ताः। भ्रातृजायास्तु धन्याय, श्रीस्तैकान्ते न्यवेदयन् ॥ १६४ ॥ मा मंस्थास्त्वमिदं देव-भ्रातरोऽमी हिता मताः। यद्देते चिन्तयन्त्यन्त–स्तद् वक्तुमपि नोचितम् ॥ १६५ ॥ "प्रायो दुर्जनवृत्तीनां, न स्वकीयः परोऽपि वा। खलत्वेन खलु क्ष्मायां, खेलयन्त्यखिलं खलाः ॥ १६६ ॥" धन्यः प्रोवाच हे भ्रातृ–जाया! मायाविवर्जितम्। भ्रातृणामपराधो हि, कोऽपि नारोपितो मया ॥ १६७ ॥" अपराद्धं विनाऽन्येऽपि, ना(नो) रुष्यन्ति द्विपोऽपि च। किं पुनर्भ्रातरश्चैको–दरत्वेन कृतादराः? ॥ १६८ ॥ बान्धवास्तु त्रयोऽप्यग्र्या, मत्सरोच्छे(त्से)कपिच्छलाः। चिन्तयन्त्यन्यथा धन्ये विधातुमसमञ्जसम् ॥ १६९ ॥ इत्येतद् वचनं श्रुत्वा, धन्ये मौनमुपेयुषि। खलचेष्टां कलेर्वृत्त–मिति ता जगदुर्यतः ॥ १७० ॥ "अकारणक्रुधोऽसङ्ख्याः ससङ्ख्याः कारणक्रुधः। न कारणेऽपि कुप्यन्ति, पञ्चषास्ते जगत्यपि ॥ १७१ ॥" तदाकर्ण्य सकर्णोऽन्त–र्धन्यो मन्युविवर्जितः। न स्थातुमिह मे युक्तं, त्याज्यं सङ्क्लेशकृद् यतः ॥ १७२ ॥ "यत्र स्वोऽपि परो वाऽपि, प्रायो दूयेत चेतसि। तत्र न स्थीयते स्थाने, स्थाने तत्त्यागजागरः ॥ १७३ ॥ पराबाधां यतः सन्तो, नो कुर्वन्ति विवेकिनः। परपीडापरित्यागः, पुण्यमेव हि गण्यते ॥ १७४ ॥" इति निश्चित्य चित्तान्त–र्नितान्तोत्साहसाहसः। निर्ययौ स्व-गृहात् पुण्य–परीक्षामीक्षितुं क्षितौ ॥ १७५ ॥ ग्रामाऽऽकर–पुराराम–रामणीयकसङ्कुलाम्। स पृथ्वीं परिबभ्राम, निकामस्वजनात्मकः ॥ १७६ ॥ तं भ्रमन्तमदभ्राभं, यो जनः पश्यति स्म सन्। स स्वीयं सफलं मेने, नयनद्वयमायतम् ॥ १७७ ॥ मार्गगः सोऽन्यदा क्वापि, क्षेत्रासन्नभुवि स्थितः। कौटुम्बिकेन केनापि, दृष्टः स्पष्टतराकृतिः ॥ १७८ ॥ प्रस्तावाद् भोजनार्थं च, न्यमन्त्र्यत स मित्रवत्। 'भाग्यभाजस्तु सर्वत्र, लभन्ते समयोचितम्' ॥ १७९ ॥ ततस्तदनुरोधेन, स त्वासीनस्तदन्तिके। यावत् तावत् समा-

याता, भक्ताहर्त्री हि तत्प्रिया ॥ १८० ॥ कौटुम्बिकेन सा प्रोचे, भोजयातिथिमादितः(इता) । भोजनावसरे धन्यै—र्यतो भाग्यात्
स मृग्यते ॥ १८१ ॥ उपवेश्याग्रतोऽभ्यग्रो, धन्यस्तत्प्रियया तया । क्षीर—खण्डाज्यसाम्राज्य—सुभोज्यं भोजितस्ततः ॥ १८२ ॥
कुटुम्बिनस्तु तत्कालं, हलं खेटयतस्ततः । लग्नं हलं बलात् कण्ठे, कलस(श)स्य भुवस्तले ॥ १८३ ॥ स्वर्णपूर्णं तमालोक्य,
कलशं विलसन्मुदा । लब्धं तद्भाग्यतस्तस्मै, ढौकयामास सोऽञ्जसा ॥ १८४ ॥ भो ! भाग्यवद् गृहाणेदं, त्वद्भाग्यान्निर्गतं ध्रुवः ।
मतस्त्वयि समायाते, क्षितेराविरभूददः ॥ १८५ ॥ कुटुम्बेनेति स प्रोक्तः, संयुक्तः शक्तचेतसा । महामना धनायामुक, यच्चक्रे
तन्निरूप्यते ॥ १८६ ॥ महोदारमना धन्यः, प्रायशो निःस्पृहाशयः । तस्मै कुटुम्बिने दत्त्वा, तदग्रे चलति स्म सः ॥ १८७ ॥ क्रमात्
कौतुकसम्पूर्णा—मुर्वरामुर्वराकृतिः । क्रामन् राजगृहं प्राप, सम्पद्राजगृहं वृहत् ॥ १८८ ॥ यत्र सुत्रामसुत्राम—सुत्रणाक्षत्रक्षत्रभृत् ।
राजते श्रेणिको राजा, श्रेणिकोविदवन्दितः ॥ १८९ ॥ यस्मिन्नर्हद्गृहोत्त(त्तु)ङ्ग—पताकाभिरिवाभितः । समागन्तुमनाः पान्थ—
जनस्त्वाहूयते हितात् ॥ १९० ॥ तदुपान्तगते क्वापि, जीर्णोद्याने श्रमच्छिदे । तदा शिश्राय विश्राम—कामभृद् धन्यनामकः
॥ १९१ ॥ पुराऽऽसीत् सीददत्यन्तं, शुष्कं पक्वं च यद् वनम् । जल—पुष्प—फलापेतं, चेतःसन्तापहेतुकम् ॥ १९२ ॥ तद् धन्यस्य
प्रभावेन, वसन्तेनेव वासितम् । सज्जलं फल—पुष्पाली—भालीवाजनि नन्दनम् ॥ १९३ ॥ युग्मम् ॥ यत्र धन्यजनोऽन्योऽति—याति
गातिश्रयः स्वयम् । तत् स्थानं सोऽपि चाप्नोति, सर्वदा सम्पदां पदम् ॥ १९४ ॥ तदा कुसुमपालस्तु, मालिकोऽत्र समागतः ।
तद् दृष्ट्वा तादृशं दृश्यं, साश्चर्यो मुमुदे हृदि ॥ १९५ ॥ किमेतदिति चित्तान्त—श्चिन्तयन् यावदस्ति सः । तावदग्रे व्यलोकिष्ट,
पुण्यपुण्याकृतं नरम् ॥ १९६ ॥ तं दृष्ट्वा धन्यमासीन—मनुदासीनमाकृतेः । परिरभ्याभिसम्भाष्य, निन्ये स्वगृहमाग्रहात् ॥ १९७ ॥

धन्यं धामसमायातं, मालिकः सकुटुम्बकः। सच्चक्रे बहुमानादि–प्रदानेन प्रमोदतः॥ १९८॥ "यतः सिता मता हंसाः, शिखिनश्चित्रिता यथा। जन्म मृत्युश्च सर्वत्र, तद्वद् भोगाश्च भोगिषु॥ १९९॥" एवं च तिष्ठतस्तत्र, सुखाभिमुखतायु(जु)षः। धन्यस्य यदभूद् भव्यं, नव्यं श्रयं तदुच्यते॥ २००॥ अथ तत्र पुरे राज्ञः, श्रेणिकस्य क्षितिक्षितः। सोमश्रीनामतः पुत्री, मित्रीकृत-रमाप्सराः॥ २०१॥ कनीयसी स्वसा चास्ति, शालिभद्रस्य भद्रभूः। सुभद्रानामभृच्छील–समुद्रामुद्रचन्द्रिका॥ २०२॥ सुता कुसुमपालस्य, तस्य पुष्पवती पुनः। अस्ति विस्तारिलावण्य–पुण्यपुष्पैकवाटिका॥ २०३॥ इति तिस्रोऽपि ताः कन्याः, पुण्याः पुण्याहसम्भवाः। परस्परप्रीति–स्यूताः सख्योऽभवन् मिथः॥ २०४॥ ताभिरभ्यधिकप्रीत्या, मन्यते स्म सविस्मयम्। यदाऽऽत्मभिर्वरस्त्वेको, वर्तव्यो वरमूर्तिमान्॥ २०५॥ यतो नः क्रीडितं व्रीडा–क्रीडमुत्पीडमीक्षितम्। भणितं गुणितं ज्ञातं, तत् सर्वं फलवत् ततः॥ २०६॥ एवं तासां च तिसृणां, घुसृणार्चितस्तनत्विषाम्। याति कालः कलाकेलि–कलाकेलि-कुतूहलैः॥ २०७॥ पुष्पवत्यन्यदा सोम–श्रियाः सख्या विचक्षणा। समाख्यातवती वार्त्तां, धन्यस्य गुणसम्पदाम्॥ २०८॥ तां श्रुत्वा राजसूः साऽऽसीद्, भावसद्भावभाविता। सानुरागाङ्गसंसङ्गि–चञ्चद्रोमाञ्चकञ्चुका॥ २०९॥ सत्यमेतद् यतः काम–शास्त्रेष्वेवं निरीक्ष्यते। 'प्रियश्रुतेः पुरन्ध्रीणां, कामभावा भवन्त्यमी'॥ २१०॥ "सज्जनानां सुजनानां, स्वजनानां गुणोत्करः। सज्जनानां सुजनानां, स्वजनानां श्रुतिप्रियाः॥ २११॥" सोमश्रीर्ज्ञापयामास, सख्या स्वां मातरं तराम्। साऽपि श्रीश्रेणिकक्ष्मापं, तच्चिकीर्षुप्रकर्षतः॥ २१२॥ प्रहृष्टः श्रेणिको राजा, तमाकार्य स्वकार्यवित्। व्यलोकिष्ट पटिष्ठश्री–सि(शि)श्रीकृतपुरं वरम्॥ २१३॥ अथो मिथः समालोक्य, सर्वस्वजनमानवैः। मेलयित्वाऽभ्यसामग्री–र्महोत्सवपुरस्सरम्॥ २१४॥

सुलग्ने सुमुहूर्त्ते च, सुवेलाया बलोदये। धन्यः कन्याः स्वका धन्या, महद्‌र्ध्या परिणायितः ॥ २१५ ॥ युग्मम् ॥ "को वरं प्रवरं प्राप्य, भाग्ययोगार्पितं पिता । साक्ष्यसद्व्ययवाहाय, विवाहाय विलम्बते ? ॥ २१६ ॥" चतुर्षु मङ्गलेष्वेवं, प्रवृत्तेषु प्रदक्षिणम् । ऊलूलूध्वनिरावेने, पौराणां श्रवणोत्सवम्॥२१७॥ स्फेरकेषु प्रवृत्तेषु, चतुर्षु चतुरीं परि। हस्तमोकविधौ वध्वा, यल्लब्धं तन्निशम्यताम् ॥२१८॥ देश–प्रासाद–हस्त्यश्व–विश्वविश्वम्भराऽऽदिकम् । मणि–मुक्ताफल–स्वर्ण–पूर्णपात्रमनेकशः ॥ २१९ ॥ दिव्यवस्त्र–परीभोग–राजचिह्नानि यानि च । सुतास्नेहाच्च पितृभि–स्तस्मै तत् सर्वमर्पितम् ॥ २२० ॥ युग्मम् ॥ पुरस्यान्तर्विशेषेण, कीर्त्तिः स्फूर्त्तिमत्स्वरा । देहे श्रीश्च स्त्रियो गेहे, धन्यं पुण्यादवीभजन् ॥ २२१ ॥ 'यस्य धर्मो धनं तस्य, धनात् कामः सुखं ततः ।' समकालं त्रयं दध्रे, धन्यः पुण्यात् पुराऽर्जितात् ॥ २२२ ॥ भोगास्तद्भोगशक्तिश्च, दारास्तत्प्रीतिरुत्तरा । वैभवं दानशक्तिश्च, भाग्याद् धन्ये तदाऽभवत् ॥ २२३ ॥ वीप्सा कान्ताऽप्सरोऽभीप्सु–र्गीतामृतरतिस्थितिः । दिव्यं शय्यासुखं साधो–र्दाम(दो)गुन्दुक इवामरः ॥ २२४ ॥ "ददते पात्रदत्तिं ये, बाला बालाश्च भावतः । लभन्ते सुलभं ते हि, वैभवं प्राप्य वै भवम् ॥ २२५ ॥" ज्ञात्वेति तत्त्वतो दानं, ददानोऽर्थिगणार्थितः । सकान्तः सुखमेकान्तं, भुङ्क्ते भोगफलोदयम् ॥ २२६ ॥ युग्मम् ॥ प्रमदात् प्रमदाक्रीडे, क्रीडन् क्रीडासनीडमुत् । विद्युत्युक्तप्द(स्पष्ट)सौभाग्य–भाग्योऽसौ भौम(भोग)भासुरः ॥ २२७ ॥ इत्यादिसुखसंलीनः, श्रीनवद् भोगसागरे । क्षणवत् पुण्डरीकाक्षो, वासरान् समसीसरत् ॥ २२८ ॥ इति सततसुखश्रीभासुरो भासुरो वा, द्युतयुवतिसुतारं राजते राजतेजाः । जयति च यतिचर्य्यं भावयन् जैनधर्मं, स्वहृदि सहृदयोऽयं सज्जयानन्दलक्ष्मीः ॥२२९॥ एवं तत्र पुरे नरेश्वरपुरःप्रोद्भूतभाग्योदयः, पुष्यन् मुख्यमनुष्यसौख्यमखिलं विख्यातिमाख्यान् सुखाग्र् । सन्मानं त्वसमानमात्मनि दधद् धन्यो नृपेभ्यो गणे, यत् संयोगमवाप ताप-

रहितस्तत् साम्प्रतं प्रोच्यते ॥२३०॥ इति धन्यमहापुण्य–नररत्नशिरोमणेः। जिनधर्मजयानन्द–प्रस्तावो द्वितीयोऽभवत् ॥२३१॥

इति श्रीधन्यचरिते सुकुलावतार–जन्म–यौवनावसर–विदेशप्रचार–राजगृह-
प्राप्ति—विवाहलाभ–भोगसंयोगलक्षणो द्वितीयः प्रस्तावः ॥ २ ॥

## अथ तृतीयः प्रस्तावः।

अथास्य धन्यस्य यथार्थनाम्नः, क्रमात् परीणामधुरन्धरस्य। राजगृहस्थस्य गृहस्थितस्य, यज्जातमेतत् परिकीर्त्यतेऽतः ॥ १ ॥ "धर्मेण लक्ष्मीरतिनिर्मलाः कलाः, धर्मेण सौख्याप्तिरतीव सत्फला। धर्मेण शश्वत् स्वजनादियोगता, धर्मेण निःशेषसुखोपयोगता ॥ २ ॥" अथान्यदा मुदोपेत–श्वेतःश्रेयःश्रियाऽन्वितः। गवाक्षस्थो महावक्षा धन्यः पश्यन् पुरं पुरः ॥ ३ ॥ राजमार्गे क्षिपन् दृष्टिं, वृष्टिं पीयूषरोचिषाम्। अद्राक्षीत् पितरौ साक्षात्, क्षुधाक्षामौ कुभिक्षुवत् ॥ ४ ॥ युग्मम् ॥ प्रथमं प्रथयंश्चेतः, संशयि। विचार्य च पुराकर्म–मर्मनिर्माणकर्मणाम् ॥ ५ ॥ सम्यग् निरीक्ष्य विज्ञायाऽ–वज्ञाय च मनोभ्रमम्। उपलक्ष्य द्वाःस्थेनाकारयत् ततः ॥ ६ ॥ वेश्ममध्यमथो नीत्वा, ममत्वादरसुन्दरम्। समावर्ज्य संमभ्यज्य, संस्नाप्य च ७ ॥ वस्त्राभरणसम्भारै–र्भूषयित्वा विशेषतः। पुरस्कृत्य च सत्कृत्य, स तत्पादौ मुदाऽनमत् ॥ ८ ॥ युग्मम् ॥ ऽऽसनमानस्य, तौ पुनर्विनयान्वयात्। प्रपच्छ स्वच्छधीरर्थ–बन्धुशुद्धिमधि स्वयम् ॥ ९ ॥ हे मातृ–पितरौ! ब्रूतं, किं भूतं क्व गतं धनम्?। कथमेतादृशी जाताऽ–प्यवस्था दुःस्थितत्वतः ॥ १० ॥ ततस्तौ धन्यसम्पृष्टौ, संस्पृष्टौ हर्षवर्षणैः।

तं च प्रत्यूचतुर्वाचा, यथा वृत्तमथात्मनः ॥ ११ ॥ यत् त्वया त्वर्जितं वित्तं, स्वभाग्याभोगभागतः । त्वया सहैव तद् यातं, सर्वेमुर्वपि सम्प्रति ॥ १२ ॥ "यथा च(चा)न्द्रं महस्तेन, दिनेनेन सदा दिनम् । तथैव धनिना सार्धं, धनमेतीति निश्चितम् ॥ १३ ॥" सत्येवैविधसम्बन्धे, निबन्धे नु स्वकर्मणाम् । त्वमस्माभिः श्रुतः श्रुत्वा, राजा राज्यश्रिया श्रितः ॥ १४ ॥ आगच्छामो वयं वत्स !, वत्सले त्वां पुनः प्रति । यदापन्नैर्जनैः स्वीयः, स्वजनो ह्यनुगम्यते ॥ १५ ॥ पुनर्धन्याभिधोऽभाणीत्, प्रमाणीकृतसद्गुणः । मार्गे भ्रातरस्ते क ?, सन्ति ये दुर्लभा भुवि ॥ १६ ॥ "देशे देशे कलत्राणि, मित्राणि च पदे पदे । देशं तं नैव पश्यामि, यत्र भ्राता सहोदरः ॥ १७ ॥" इति धन्यपरिपृष्टे-ऽवशिष्टेऽम्बाऽवदद् वत । ते सन्ति त्रायमाणस्थाः, पुराद् बहिरिहाहिताः ॥ १८ ॥ धन्यस्तु तान् समानाय्य, न्याय्यवित् सपरिच्छदान् । सन्मान्य मान्यवद् धान्य-धनाद्यं च ददौ तदा ॥ १९ ॥ विभज्य च क्रमाद् ग्राम-सीमान्तारं पृथक् पृथक् । स्थापयामास सावासे, सुजनास्तादृशा यतः ॥ २० ॥ " ये सन्तः सन्ति सन्तुष्टा, विशिष्टा-भीष्टचेष्टिताः । दुर्जनेष्वपि ते कुर्युः, सुजनेष्विव सुन्दरम् ॥ २१ ॥" "उपकारिषु ये तूप-कारिणस्ते जना घनाः । अपकारिषु ये चोप-कारिणस्ते सुसज्जनाः ॥ २२ ॥" एवं स्वजनसौजन्य-संयोगे योगमागते । वेश्मभारं सदाचारं, पित्रोस्तत्र न्यवीविशत् ॥२३॥ आलनाऽऽस्ते मनागिच्छा-ऽभीप्सुको वाञ्छितोत्सवम् । विलसन् ललना लीला-कमलाः कमलायते ॥२४॥ यथा वृन्दावने स्त्रीभि-र्गोविन्दो विन्दते सुखम् । तथाऽऽशास्ते स पत्नीभि-र्भुङ्क्ते वैषयिकं सुखम् ॥२५॥ यद्वद् विन्ध्याटवीमध्ये, करिणीभिः करीश्वरः । कान्ताभिस्ताभिरश्रान्तं, क्रीडत्यन्तःपुरे तथा ॥ २६ ॥ एवं सति गते काले, कियत्यपि सुखाशिषाः(खाःशिष) । पुनर्धन्यस्य भ्रातृणां, दुष्कर्मोदयमासदत् ॥ २७ ॥ कश्चिच्छामत्सरोत्सेकं, धन्ये दधति तेऽधिकम् । तच्छ्रुत्वा पालाघवं श्रुत्वा,

परैर्व्यन्ते प्रतिक्षणम् ॥ २८ ॥ "येऽधमाः प्रायशः पूर्वा-धर्मैकर्मकुवर्मिताः। स्वस्मै परस्मै धन्याय, ते द्विषन्ति द्विपो यथा ॥ २९ ॥" ते त्रयः कुधिया सत्रा, पर्यालोच्य च्युतोचितम्। पृथग्वासाय सापायाः, प्रोचुर्नीचाः पितुः पुरः ॥ ३० ॥ स्थास्याम-स्तात ! नैकत्र, तद् विभज्य प्रयच्छ नः। यच्छारं येन धन्येन, पृथग्भूता वयं परम् ॥ ३१ ॥ पृथग्भूता वयं श्रेष्ठा ज्येष्ठानुक्रम-भागिनः। वत्स्यामो निजभाग्येन, किं धन्येन सताऽपि हि ? ॥ ३२ ॥ सकर्णः स समाकर्ण्य, श्रेष्ठी ज्येष्ठात्मजोदितम्। व्यचि-न्तयदिति स्वान्ते, यदेते भाग्यभङ्गुराः ॥ ३३ ॥ लभन्ते त्विति निर्भाग्याः, खादन्तः खादितुं न यत्। स्वदुर्बुध्ध्या विराध्यैनं, धन्यं धन्यतमाग्रिमम् ॥ ३४ ॥ "भाग्यायोग्या नराः प्रायः, प्राग्दुष्कर्मप्रणोदिताः। तच्चेष्टन्ते विनष्टेष्टं, न तिष्ठति यतोऽखिलात् ॥ ३५ ॥" ध्यात्वेति हेतिवच्चित्त-पीडकं श्रीडकं सताम्। प्राह तान् सहितं शिक्षा-ऽन्वक्षं क्षणमवेक्ष्य यत् ॥ ३६ ॥ अये पुत्राधमाधन्या !, जन्याजन्यमनोभ्रमाः। धन्यार्जितं हतात्मानः, सन्तु जेमन्त इत्वराः ॥ ३७ ॥ युष्माकं कथ्यते कथ्यं, किमथापथ्यमुत्पथा। पूर्ववच्चाधुना येषां, दुर्बुद्धिः सविधीभवेत् ॥ ३८ ॥ तत् तत् तातवचोऽग्राच्यं, मत्वाऽऽत्मनि नियोजितम्। तेऽप्यूचिरे विरेकोक्तं, वाक्यं पाक्यमिवांहसः ॥ ३९ ॥ धन्योऽयं लघुरप्याशु, युष्मन्मस्तकचाटितः। साररत्नान्यलं लात्वा, पलायिष्ट स दुष्टवत् ॥ ४० ॥ ततो धनप्रधानत्वा-दत्राप्येष विशेषतः। राजादेरभवद् भाता, जामाता जातसातभृत् ॥ ४१ ॥ पितृपादाः प्रकुर्वन्तु, राज्यं धन्येन संयुजः। वयं प्रभाते भोक्ष्यामः, पृथग्भूय ततस्ततः ॥ ४२ ॥ इति श्रुत्वा श्रयोऽश्रव्यं, भ्रातृणां वचनाञ्चनम्। जागर्त्ति मे पुन-र्भाग्यं, ब्रुवते यदमी त्वदः ॥ ४३ ॥ चेन्मे पूर्वभवोपात्तं, पुण्यमस्ति सुविस्तृतम्। पुनस्तस्य परीक्षार्थं, यामि देशान्तरं वरम् ॥ ४४ ॥ विमृश्येति हृदा धन्यो, धन्यम्मन्यो हृदा मुदा। चचालोत्तालवाचाला-नुकूलशकुनानिलः ॥ ४५ ॥ " गोष्ठैः किमु

तेर्गेहे–नर्दिभिः कूपदर्दुरैः ? । निःशेषां ये न वीक्षन्ते, नानाऽऽश्चर्यधरां धराम् ॥ ४६ ॥" इति भ्राम्यन् क्षमां पश्यन्, कौतुकानि निलोकयन् । प्राप पापविनिर्मुक्तं, वत्सदेशं सुसुन्दरम् ॥ ४७ ॥ कौशाम्बी नगरी यत्र, कौशाम्बीभूतभूतला । स्फारप्राकारविस्तार–कारस्कारपुरस्कृता ॥ ४८ ॥ यस्यां लोकः कृपालोकः, शोकशङ्काविवर्जितः । दानादिपुण्यनैपुण्य–पण्यपुण्यापणक्षणः ॥ ४९ ॥ शतानीको नृपस्तत्र, शतानीकसमाकुलः । राजते राजसत्कीर्तिः, कान्ता यस्य मृगावती ॥ ५० ॥ स राज्यं कुरुते राजा, जायमानमना गुणैः । लोकम्पृणस्फुरद्भ्रातो, ग्रात्यः प्रातरपि प्रभुः ॥ ५१ ॥ एकदा दापितार्थेन, भाण्डागारानुयोगिना । अनुयुक्तेन विज्ञप्तः, कोशे रत्नं विभोऽस्त्यदः ॥ ५२ ॥ तत्परीक्षा–निरीक्षाऽऽप्ताः, पृष्टाः प्रष्ठास्तदीक्षकाः । न सम्यक् कोऽपि जानाति, तत्परीक्षां परीक्ष्यपि ॥ ५३ ॥ तदा सन्देहमुच्छेत्तुं, परिच्छेत्तुं च तद्गुणम् । डिण्डिमो वादयामासे, राज्ञा विज्ञातुमिच्छता ॥ ५४ ॥ एकमस्ति महामूल्यं, मत्कोशे रत्नमुत्तमम् । यस्तत् सम्यक् परीक्षेत, ददे तस्मै मुदेप्सितम् ॥ ५५ ॥ तथाप्येतन्मनस्तुष्ट्यै, श्रूयतां श्रवणप्रियम् । येन प्रत्ययमायाति, मानसं मानसंविदा ॥ ५६ ॥ दन्तिनां शतमुन्मत्त–मश्वानां शतपञ्चकम् । सौभाग्यमञ्जरीं पुत्रीं, ग्रामपञ्चशतान्विताम् ॥ ५७ ॥ एतच्छ्रुत्वाऽग्रतः स्थित्वा, श्रीपथे श्रीपथे स्थितः । स धन्यः स्पृष्टवान् स्पष्टं, पटहं पटुहस्ततः ॥ ५८ ॥ तत्समं स ययौ राज–वेश्म विस्मयसस्मयम् । गुणाः प्रायेण मान्याः स्युः, किं पुनः पुण्यधन्यगाः ? ॥ ५९ ॥ बहुमानं ददौ राजा, समाजाश्रितसंश्रितः । योग्यमागन्तुकस्यापि, गौरवं गुणिनां किमु ? ॥ ६० ॥ तदाकृतिप्रकृत्याऽपि, नृपः प्रमुमुदेतमाम् । स्थानेऽस्य गुणिता यस्मा–दाकृतौ सा कृतस्थितिः ॥ ६१ ॥ पञ्चाङ्गस्पृष्टभूपृष्ठः, स ननाम क्षमापतिम् ।

कुशलालापसंलापात् सोऽपि राज्ञा व्यभाव्यत ॥ ६२ ॥ रत्नयत्नविदा तेन, परीक्षोदीक्षिता तथा । यथा राज्ञः सभायाश्च, चमत्कारोऽभवच्चिरम् ॥ ६३ ॥ सर्वे सभासदः सद्यः, प्रमोदामोदमेदुराः । राज्ञे विज्ञपयामासु-स्तेन रत्नवतीं भुवम् ॥ ६४ ॥ "सन्ति सन्तः कियन्तस्ते, ये गुणैः प्रगुणैर्निजैः। गुणिचित्तप्रशस्त्यश्म-न्यात्मानं तुल्किरन्त्यरम् ॥ ६५ ॥" रत्नजातिश(शि)रो-रत्न-परीक्षाक्षेपवीक्षणात् । रञ्जितः सकलो लोक-स्तं व्यलोकत लोकतः ॥ ६६ ॥ शतानीकोऽथ सन्नीकः, स्ववचश्चयनिश्चयी । तस्मै प्रोक्तधनस्मेरां, ददौ पुत्रीं प्रसादतः ॥ ६७ ॥ "तैर्धन्यैर्भूषिता भूमि-र्ये निजोक्तसुयुक्तयः । मुक्ता इव गुणैर्युक्ता, निरुह्यन्ते प्रयत्नतः ॥६८॥" "ते जनाः सज्जनाः सन्ति, कियन्तो न घनाघनाः । घनाघना इव घन-प्रतिपन्नप्रतिक्रियाः ॥ ६९ ॥" अथ धन्योऽपि पुण्यात्मा, सात्म्यतः सकलाः कलाः । केलयन् मोदयाञ्चक्रे, सचक्रं पूर्णचन्द्रवत् ॥ ७० ॥ धन्यस्तु शस्तलग्नज्ञा-ज्ञते लग्नेऽस्तिलग्नके । हस्तमोचनदानाभ्या-मुपयेमे नृपात्मजाम् ॥ ७१ ॥ तत्रोत्सवा नवनवा, दान-मानमुखाः सुखम् । लोकाः सम्प्रीणिता दत्या, विशेषाच्च वनीपकाः ॥ ७२ ॥ यतः—" जल्प प्रियं प्रदर्शय, हृदादरं सुहृदि निपत पादेषु । दानं विना न किञ्चित्, सुशोभते दन्तदर्शनिका ॥ ७३ ॥" "सर्वः कोऽपि जनः प्रायो, महत्त्वाय महत्त्वरः । महत्त्वं प्राप्यते तर्हि, यर्हि दानं प्रदीयते ॥ ७४ ॥" राजपुत्र्या समं धन्यः, पौनःपुन्येन पुण्यतः । सुखं वैषयिकं भुङ्क्ते, लक्ष्म्या लक्ष्मीपतिर्यथा ॥ ७५ ॥ योग-क्षेमक्षमाक्षेपः, सदौदार्यमहोर्जितः । धन्यः साधुरिति ख्यातिं, प्राप क्ष्मापसमोऽपि सः ॥ ७६ ॥ नव्यद्रव्यार्जनैश्वर्य-कृते सत्कृत्य कृत्यवित् । वाणिज्यकारकास्तेन, प्रहिताः प्रहितायतेः ॥ ७७ ॥ सुवाणिज्यानि ते कृत्वा, भृत्वा द्रव्यमुपार्जितम् । आगच्छन्ति च गच्छन्ति, वणिजां सत्क्रमोऽस्त्ययम् ॥ ७८ ॥ एवं याति पुरा ख्याति-भाति काले निराकुले । धन्यस्य तस्य

सौभाग्य-भाग्यभोग्यं किमप्यभूत् ॥ ७९ ॥ अन्यस्मिन् दिवसे कस्मिन्, स्वकीर्त्यर्थं यथार्थकृत्। लोकाचारकृते चार्वा-रेभे खानयितुं सरः ॥ ८० ॥ यतः-"खातं जलाश्रयो वृक्षा, देवतायतनानि च। मृतानामपि जन्तूनां, जीवितं मनुरब्रवीत् ॥ ८१ ॥" वापीरपापी सरसीरसीमाः, कूपानकूपारगभीरचेताः। प्रपा[:] कृपावानतनिष्ट देव-सौधान्यसौ धार्मिकचक्रवर्ती ॥ ८२ ॥ अतस्तन्नगराभ्यर्णे-चातुर्वर्ण्यासरर्णनम्। तेन खानयितुं नीरया, प्रारेभे रभसा सरः ॥ ८३ ॥ यतश्च-" सरो वापी प्रपा कूप-कुण्ड-देवकुलादिकम्। कीर्तनं कार्यते तीर्थे, कीर्तिस्फूर्त्तिमभीप्सुभिः ॥ ८४ ॥" इतश्च श्रेष्ठिनो गेहाद्, धन्ये धन्ये विनिर्गते। सद्भवे रत्नदोजोभि-र्दीपे योद्दीपितान्तरे ॥ ८५ ॥ दारिद्र्यं सान्द्रमायातं, ध्वान्तवद् ध्वंसिताध्वकम्। पुण्योद्योते गते तस्मिन्, विस्मयः कः समुत्पद्यते ? ॥ ८६ ॥ युग्मम् ॥ यतः—" तैलं नास्ति घृतं नास्ति, नास्ति मुद्ग-युगन्धरी। वल्लार्थे लवणं नास्ति, नास्ति तद् यत् तु भुज्यते ॥ ८७ ॥" यथा च—" न तस्यास्ति तैलं घृतं नास्ति किञ्चि-न्न मुद्गा युगन्धर्युपेताश्च सन्ति। न वल्लादिशाकेऽपि लावण्यमस्ति, न तच्चास्ति यद् भुज्यते भोज्यकार्ये ॥ ८८ ॥" इति सर्वप्रकारेण, धनसारस्य मन्दिरे। धनसारत्रुटिर्जाता, विना धन्यं तमुत्तमम् ॥ ८९ ॥ ततः श्रेष्ठी मतिश्रेष्ठी-कृतचित्तो व्यचिन्तयत्। यदस्माकमभूद् भूति-स्तद् धन्यस्यैव पुण्यतः ॥ ९० ॥ गौरवं च गतं स्वेषु, स्वापतेयं विनाऽधुना। 'धनाधीना यतः सर्वा, गृहस्थानां गृहस्थितिः ॥ ९१ ॥' धन्याधीनं धनं तच्च, तेन यातं समं समम्। दीपे वेश्मान्तरस्मेरे, भासते भवनं किमु ? ॥ ९२ ॥ धन्यप्रभावतः ख्यातः, पुरे पूज्योऽभवं पुरा। किमु शक्रध्वज-व्याजात्, स्तम्भः पूज्यैर्न पूज्यते ? ॥ ९३ ॥ " यस्मिन् कुले यः पुरुषः प्रधानः, स यत्नतः स्यात् परिरक्षणीयः। तस्मिन् प्रयाते सकलं प्रयातं, न नाभिभिन्नास्त्वरकास्त्वरन्ते ॥९४॥" "ते धन्या ये निजं भाग्य-भाजं राजसमं समम्। चकोरा इव सेवन्ते, सदानन्दा-

सुवत्तुवाः ॥ ९५ ॥” अहं त्वनिष्ठापिष्ट-वृद्धपुनरयोऽत्रपः । दरिद्रो रत्नवद् यत्नाद्, यत् तं न समभालयम् ॥ ९६ ॥ एतत्पुर-
न्धितो दुःस्थः, स्थित्यपेतमना मनाक् । लघुवाणिज्यकं कर्म, कथं कुर्वे धनं विना ? ॥ ९७ ॥ इति स्फुटं कुटुम्बेन, निमृश्या-
मृश्य चात्मना । दूरदेशान्तरं यातु-मुद्यतः सद्य एव सः ॥ ९८ ॥ यत्र कोऽपि न जानाति, परमार्थमनर्थकम् । परकर्मापि निर्मा-
यो-दरं यत्र तु पूर्यते ॥९९॥ यतः-“सद्बुद्धेरपि बुद्धिस्तु, निर्धनस्य विनश्यति । घृत-तैलान्न-पानासि-वस्त्रेन्धन-धनाययाः ॥१००॥”
नदीभिर्यदि नोदीर्ण-पयोभिः परिपूर्यते । तदोदरेषु तूदन्वान्, दीयमानः प्रहीयते ॥ १०१ ॥ इति चिन्ताचिताचान्त-स्वान्तस्ता-
न्तो नितान्ततः । यच्चकाराऽऽतुरः श्रेष्ठी, तत्स्वरूपं प्ररूप्यते ॥ १०२ ॥ धन्यजायाद्वयं त्वाद्यं, प्रेष्य पितृगृहं वृहत् । श्वशुरश्च पुरस्कृत्य,
सुभद्रामित्यभाषत ॥ १०३ ॥ भद्रे सुभद्रे ! ते भद्रं, भूयाद् भद्रङ्करं चिरम् । प्रिया हि त्वं पितुर्वेश्म, तिष्ठ तत्र स्थिता सुखम्
॥ १०४ ॥ कुलस्त्रीभिर्द्वयं श्रेयं, श्रेयोऽर्थं सम्पदापदोः । पत्युर्वेश्म पितुर्वेश्म, नात्र काऽपि त्रपा ननु ॥ १०५ ॥ इति श्रुत्वा श्रवोऽपे-
य-मिव तस्य वचस्त्रयम् । सुभद्रा साऽस्तभद्रेव, ब्रूते स्म विगतस्मयम् ॥ १०६ ॥ हे तात ! भवताऽऽख्यातं भवताऽप्यात्तचेतसा ।
अथोतव्ययगवव्यक्तं, कुलस्त्रीणां मनागपि ॥ १०७ ॥ त्वया तु तावत्तुल्येन, मद्धितं कर्तुमिच्छता । तुच्छतामरसलं प्रोचे-ऽनुचितं
न्यायमेदः ॥ १०८ ॥ तथाप्यहमहङ्कार-विकारविरवर्जितम् । वदामि दामवत् वाक्यं, तत् त्वं कर्णावतंसय ॥ १०९ ॥ सुखेऽति-
सम्मुखे सम्पत्-सम्पत्तिमभये श्रये । स्त्रीभिः पितुर्गृहं श्रेयं, श्रेयसे यशसेऽक्षमा ॥ ११० ॥ श्वशुरस्य सुरस्येव, सेत्य(व्य)गेहमगर्हितम् ।
दु:खे दौःस्थ्येऽपि संसेव्यं, श्वाशुरं रंहसाहसम् ॥ १११ ॥ “ सुखी पित्रालयं याति, दुःखे त्यक्त्वा प्रियालयम् । प्रियालयं गताः
सत्य-स्वं त्यजन्ति न सुस्त्रियः ॥ ११२ ॥” श्रेष्ठी तद्वचनं पीत्वा, पीयूषमिव सौख्यदम् । सौमनस्यं मनस्याध्यात, सुधाशन इवा-

शनैः ॥ ११३ ॥ यथा—सुजानता यदा जानन्, मिलन्म(लेदम)लचेतनः । तदा तदोमहानन्दः, सम्पद्येत विदात्मतः ॥ ११४ ॥ श्रेष्ठी श्रेष्ठा वधूं ध्यात्वा, तत्त्वार्थगुणसार्थतः । सुखाशिषामिषाद् वीक्ष्य, विदेशायोद्यमं दधौ ॥ ११५ ॥ हर्षश्रेष्ठस्ततः श्रेष्ठी, प्रेष्ठीकृतवधूवचाः । कलत्र-पुत्रवध्वाप्तः, क्षिप्तं(प्रं) देशान्तरं प्रति ॥ ११६ ॥ यियासुर्वासवेश्मादौ, मुद्रां दत्त्वा ममत्वतः । द्वारं पिधाय सन्ध्यायां, निर्ययौ नगरान्निशि ॥ ११७ ॥ युग्मम् ॥ यतः—" शकटं वाटिका गावः, कृषिरुचलनं वनम् । समुद्रः पर्वतो राजा, नव दौर्गत्यशत्रवः ॥ ११८ ॥ " भ्राम्यन् ग्रामान्तरं ग्रामा-दाक्रमन् क्रमशः क्षमाम् । कर्म कुर्वन् परागारे, वृत्तिद्वारेण वर्त्तयन् ॥ ११९ ॥ क्वापि द्वित्राणि घस्राणि, क्वापि त्रिचतुराण्यपि । चतुःपञ्चानि च क्वापि, पञ्चषाणि तथा क्व च ॥ १२० ॥ एवं तिष्ठंश्चलन् श्रेष्ठी, श्रमविश्रामपूर्वकम् । सकुटुम्बः स्फुटं प्राप, कौशाम्बीनगराम्बिकाम् ॥ १२१ ॥ त्रिभिर्विशेषकम् ॥ तां दृष्ट्वा परितः स्पृष्ट्वा, [ स्पृष्ट्वा ] सञ्जीवनावनिम् । तिष्ठासुः कञ्चिदप्राक्षीत्, साक्षीकृत्य कुटुम्बकम् ॥ १२२ ॥ भद्र ! ब्रूहि हितं सत्यं, मत्वा तत्त्वसतत्त्वतः । कथं निर्वहते ह्यत्र, निर्धनस्तद्धनो जनः ? ॥ १२३ ॥ यतः—" किं पुरा पूर्वजावासै-र्निरशनैर्विनाऽपि किम् ? । प्रशस्यते प्रशंसार्हैः, स देशो यत्र जीव्यते ॥ १२४ ॥ " श्रेष्ठिपृष्टमिदं श्रुत्वा, पौरोऽप्यादीन्नरस्त्विति । शृणु लोकाघृणस्यास्य, पुरस्याऽऽजीविका नृणाम् ॥ १२५ ॥ यो धनाढ्यो जनः प्रौढ-वाणिज्येन स लाभभुक् । 'वाणिज्यं वणिजां यस्मा-ल्लक्ष्मीलम्भनमाक्षिकम् ॥ १२६ ॥' " व्यवहारस्य संशुद्धि-र्वणिजां दुर्लभा प्रभा । यथाऽऽहारस्य संशुद्धिः, साधूनां शुद्धधीधृता ॥ १२७ ॥ " निर्द्रव्याणां विनाद्रव्यं, वाणिज्यं तु कथं पृथु ? । वाणिज्याय धनं तेषा-मपि प्रायेण युज्यते ॥ १२८ ॥ धनादेव प्रधानत्वं, पूज्यत्वं प्राप्नुयाज्जनः । धनहीनः कुलीनोऽपि, न किञ्चिन्मान्यतेऽन्यवत् ॥ १२९ ॥ उक्तं च—" नयेन नेता विनयेन शिष्यः, शीलेन लिङ्गी प्रशमेन

साधुः । जीवेन कायः सुकृतेन देही, वित्तेन गेही रहितो न किञ्चित् ॥ १३० ॥" "वित्तेन लभते लोकः, स्वजनेष्वपि गौरवम् । निर्धनो मानवः क्वापि, मान्यते न मनागपि ॥ १३१ ॥" तथाप्यत्र पुरे यो यत्–कर्मकर्मीणतापणः । सगुणां तनुते वृत्तिं, विशेषस्त्वेष पोषदः ॥ १३२ ॥ धन्योऽस्ति धनिविख्यातः, साधुराजापराख्यया । प्रत्नेन तेन वित्तेन, ख्यातये खान्यते सरः ॥ १३३ ॥ नराः कर्मकरास्तत्र, युज्यन्ते कर्मकर्मठाः । लभन्ते कृतकर्माणो, भृतिमाजीवनोचिताम् ॥ १३४ ॥ सर्वारम्भेण तत्रापि, मृत्तिकाकर्षणक्षणे । भूयांसः सनरा नार्यः, प्रयुज्यन्तेतरां पुरा ॥ १३५ ॥ सरःखननमु(मृ)द्वाह–कर्मान्ते दीयते त्वदः । दीनारौ द्वौ नृणां स्त्रीणा–मेकश्छेकेन साधुना ॥ १३६ ॥ भोजनं हि प्रवाहेन, कटाहां च यथास्पृहम् । अनया नियतं वृत्त्या, वर्तते निर्धनो जनः ॥ १३७ ॥ युग्मम् ॥ सकुटुम्बः स्फुटं श्रुत्वा, श्रित्वा त्वाजीविकां तकाम् । तच्चिकीर्षुरिभूत्वेष्टी, कर्मणामीदृशी दशा ॥ १३८ ॥ तद्गिरा स सरःखात–कर्मणा शर्म मानयन् । गतः श्रेष्ठी कुटुम्बेष्टः, श्रेष्ठः किं कुरुतेऽर्दितः ? ॥ १३९ ॥ खातकर्मकरैः सार्धं, स्पर्धमानः कुकर्मभिः । सरः खनन् वहन् मृत्स्नां, कृत्स्नमस्ति कुटुम्बयुक् ॥ १४० ॥ यतः—" यदा यस्य पुरोपात्तं, कर्मोदेति दुरासदम् । स सीदति पदापेतो, विषादः कोऽत्र चित्रदः ? ॥ १४१ ॥" कर्मणा रामचन्द्रोऽपि, सीता–लक्ष्मणसंयुतः । भ्रामितः भ्रामितः काम–मटन् पञ्चवटीवने ॥१४२॥ हरिश्चन्द्रः सुतारा च, रोहिताश्वस्तदात्मजः । कतरं(रत्) कारितं कर्म, परवेश्मसु कर्मणा ॥ १४३ ॥ पाण्डवाः पञ्च विख्याता, द्रौपद्याऽनुपदाहृताः । विदेशे विविशुः क्लेश–महो ! कर्म महोर्जितम् ॥ १४४ ॥ राजाऽपि रङ्कवत् क्वापि, रुलति प्रतिनीकृतम् । कर्मणामग्रतः कोऽपि, न बली सबलः खलु ॥ १४५ ॥ इत्यात्मकर्मनिर्माणं, न शर्मणे घृणन् हृदा । श्रेष्ठी श्रेष्ठकुटुम्बोऽपि, दिनानि नयति स्थितः ॥ १४६ ॥ कियत्स्वपि दिनेष्वेवं, गतेषु कृतकर्मतः । यदभूदद्भुतं भूयः,

श्रूयतां तच्छ्रःश्रियम् ॥ १४७ ॥ अन्येद्युरुद्यतः सद्यः, सरोवरदिदृक्षया । वाह्यारूढः प्रभाप्रौढ–च्छत्र–चामरचञ्चुरः ॥ १४८ ॥ पुरःस्फुरत्पदात्युग्र–श्रेणिः श्रेणिगणावृतः । शुभलोककृतालोकः, कोकिलालिरसालवत् ॥ १४९ ॥ हारार्धहार–केयूर–कुण्डलाखण्डलद्युतिः । मुकुटप्रकटश्रीक–दिव्यवस्त्रसमास्तृतः ॥ १५० ॥ धन्य साधो ! जय जये–त्यादिवादिभिरादितः । गीयमानो गुणग्राम–रामणीयककर्मभिः ॥ १५१ ॥ कल्पद्रुम इवानल्प–श्चिन्तामणिरिवोचितः । कामधेनुरिवानल्प–स्तूयमानः पुनः पुनः ॥ १५२ ॥ वन्दिवृन्दकृतालोकं, लोकं पश्यन्नितस्ततः । साधुराजः साधुराजः, समायासीत् सरस्तटे ॥ १५३ ॥ षड्भिः कुलकम् ॥ ततः कर्मकराः सर्वे, कर्म त्यक्त्वा स्वकीयकम् । तं तत्रायातमालोक्य, लोचनासेचनामृतम् ॥ १५४ ॥ महाभक्त्या स्वकृत्यक्तया, जीव जीवेति जल्पकाः । तेऽष्टाङ्गस्पृष्टभूपृष्ठं, नमन्ति स्म समन्ततः ॥ १५५ ॥ साधुराजः स निर्व्याज–सुधावृष्टिसुदृष्टितः । लोकानालोकयामास, सोल्लासविनयानतान् ॥ १५६ ॥ पुनरालोकयन् तांस्तान्, प्रीतिस्फीतिस्पृशा दृशा । स कुटुम्बं विटम्बास्त–मद्राक्षीदक्षतोक्षितः ॥ १५७ ॥ दध्यौ स्वहृदये खेदं, दधन् निर्वेदमेदुरम् । दैवं हि बलवद् वेद्मि, दुर्दशा–सुदशाप्रदम् ॥ १५८ ॥ माता ममेयं प्रख्याता, पिता दुर्जनकम्पिता । सोदराः सुन्दराज्ञास्ते, भ्रातृजाया मता मया ॥ १५९ ॥ वल्लभा दुर्लभाकाराः, शीललीलाकलाकुलाः । सुविनीतगुणोपेत–चेतःस्थितिरतिप्रदाः ॥ १६० ॥ युग्मम् ॥ गोभद्रो मुद्रगोभद्रो, जनको धनकोटिभृः । भद्रा च जननी यस्या, जननीतिपुरस्कृतिः ॥ १६१ ॥ शालिभद्रोऽग्रजश्चाभूद्, भोगाभोगर्भुसप्रभः । एवमप्यसवर्ग्याऽपि, सुभद्रा मृत्तिकां वहेत् ! ॥ १६२ ॥ युग्मम् ॥ या सा गुणगणाग्रण्या, गणधरैणशिरोमणिः । प्रसह्य कर्मणाऽसह्या, वाह्यते मृत्तिकामियम् ! ॥ १६३ ॥ इत्याद्यन्तर्विचिन्त्याऽऽशु, तानाह स महा-

मनाः । समबोचत् समाकार्य, कुतो यूयमिति स्वयम् ॥ १६४ ॥ स्थानायानसमाख्यान–कृते सुकृतिना कृते । प्रश्ने तेऽथाऽऽस्म-गोपाय, किमप्याख्यन् यथा तथा ॥ १६५ ॥ यतः—" यदा न समयः स्वीयः, समुदेति मुदेनवत् । पद्माकरमिव स्वान्तं, तावन्नोद्घाटयेत् पटुः ॥ १६६ ॥ " यतः—" स कोऽपि सुजनो नास्ति, यस्याग्रे स्वाशयः स्फुटम् । प्रायशः कथ्यतेऽकथ्यो, निःश्वसन्नुच्छ्वसन्नपि ॥ १६७ ॥ " ततो धन्यपरीपृष्टे, स्पष्टे पृष्टेऽपि शिक्षितः । विमृश्याऽऽमृश्य चावश्यं, यत् किञ्चिचोत्तरं ददुः ॥ १६८ ॥ धन्यसाधुस्ततः साधु–शुद्ध्याकर्ण्य सकर्णवत् । मामेवे चेतसा नोप–लक्षयन्ति सपक्षकाः ॥ १६९ ॥ एतके दुःखिता दुःस्था–वस्थाप्रस्थापितास्थया । स्वजनास्तेऽप्यजानाना, इव जानन्ति नैव माम् ॥ १७० ॥ यतः—" किं करोति नरोऽस्य(स्तु)-प्र–दुःखदौर्गत्यसंगतः । ज्ञानं ध्यानं गुणाधानं, हीनं दारिद्र्यमुद्रया ॥ १७१ ॥ " तथापि तु मयाऽऽतन्यं, पितुर्वात्सल्यतुल्यकम् । शनैः शनैः परीक्ष्यैतां–श्चेतसिष्ये ह्रदोगतः ॥ १७२ ॥ भोजने स्वजने चा(चा)त्र, घृतं स्नेहं नियुज्य सः । सर्वकर्मकरैः सार्कं, निरातङ्कं गृहं ययौ ॥ १७३ ॥ ततः कर्मकरास्तत्र, सर्वे सम्भूय सर्वतः । परस्परं प्रजल्पन्त्य–नल्पजल्पविकल्पतः ॥ १७४ ॥ सर्वेषामात्मनामत्र, यदभूदाज्यभोज्यकम् । तदेतस्य कुटुम्बस्य, प्रभावः प्रभवत्ययम् ॥ १७५ ॥ युग्मम् ॥ पुनरन्येद्युरागत्य, धन्यः श्रेष्ठिनमूचिवान् । भवतामस्ति शस्तत्वं, भोजने स्वजनैः समम् ? ॥ १७६ ॥ श्रेष्ठी तु लज्जया सज्जः, किञ्चिन्नाख्यत् तदग्रतः । ' प्रायः परं प्रार्थयितुं, सज्जिह्वा न प्रगल्भते ॥ १७७ ॥ ' धन्यः साधुस्ततोऽवादी–दनादीनवसद्वचाः । तत्काद् ऋते कुटुम्बस्य, भाविन्यस्य निशान्धता ॥ १७८ ॥ इति संश्राव्य गेहेऽगा–दुपकारचिकीरसौ । प्रगेऽह्नाय द्वितीयेऽह्नि, तत्रागत्य स तानचक ॥ १७९ ॥ विशेषाच्छ्रेष्ठिनं श्रेष्ठ–गिरा प्रीतिसुधाकिरा । जगाद सदयस्वान्त–स्तं प्रति ज्ञातुमिच्छुधीः ॥ १८० ॥ भवतां

श्रीमतां मन्ये, कुटुम्बं मुकुटोपमम् । वर्णिका वर्ण्यते यस्मात्, काञ्चनेऽपि चिरन्तने ॥ १८१ ॥ कुतश्चेयमवस्था वो, दुःस्थताऽवस्थि-
वात्मनाम् । तदेतत् कथ्यतां तथ्यं, शुश्रूषा मे प्रकर्षतः ॥ १८२ ॥ साधुनेति तदा पृष्टे, तस्थुस्ते मौनवर्त्तिनः । धन्योऽपि
पुनराह स, तान् प्रति प्रीतिवागथ ॥ १८३ ॥ मद्गृहे बहुलं तक्र-मस्ति शस्ततमं ततः । युष्माभिरन्वहं ग्राह्यं, न ह्यत्र कापि
त्रपा ॥ १८४ ॥ एकैको घटको ग्राह्य-स्तक्रपूर्णो महत्तमः । कुटुम्बार्थे वधूः प्रेष्या, यतो वः स्यात् सुखावहम् ॥ १८५ ॥
श्रेष्ठी तद्वचनं श्रुत्वा, श्रित्वा चान्तर्मुदं तदा । महाप्रसाद इत्याख्य-ल्ललाटघटिताञ्जलिः ॥ १८६ ॥ धन्योऽप्यनन्यसामान्य-मनाः
प्राधर्म निर्मितम् । निन्द्यानिन्द्यहृदङ्गः, प्रागाद् गेहं जनावृतः ॥ १८७ ॥ अथ धन्यस्य निर्देशा-च्छ्रेष्ठी तुष्टमना मनाक् । तत्रा-
नयनयत्नाय, यथाऽनुक्रमपूर्वकम् ॥ १८८ ॥ वधूचतुष्टयीं शिष्ट-वारकादनुवासरम् । सम्प्रेषयति सुप्रात-र्नियतं तक्रहेतवे ॥१८९॥
युग्मम् ॥ धन्यस्तु गृहमागत्य, तत्कालमतुलाशयः । स्वपत्नीं ज्ञापयामास, तक्रादानाय तद्दिने ॥ १९० ॥ प्रियादेशप्रवेशेन,
शतानीकसुता मता । विशेषसुन्दरं तक्र-मवक्रवदनं ददे ॥१९१॥ यतः—" यत्र कापि हि यत् तद् वा, दीयते वस्तु दित्सुना ।
तदादरपदागारं, सारं तत् स्वर्णसौरभम् ॥ १९२ ॥ " पुनः कदाचित् प्रस्तावे, शस्तावेशवशंवदः । प्रियां धन्यः समाचष्ट,
शिष्टात्मा सुविशेषतः ॥ १९३ ॥ हे सुभ्रु ! यदि सर्वत्र, समं सज्जनमानसम् । तथापि तन्यते तज्ज्ञै-र्गुणागुणविचारणा ॥ १९४॥
ततो यदा यदाऽभ्येति, सुभद्रेति सुभद्रभः । तदा तदा त्वयाऽऽधेयः, स्वप्रेयःप्रणयान्वयः ॥ १९५ ॥ धन्यः पुनः प्रियां प्राह,
पुण्याहसमनाक्रमः । जनो जानीहि मानी हि, प्रेयः सर्वः स्वमानसे ॥ १९६ ॥ तथापि श्रेष्ठिनस्तस्य, चित्रं पुत्रचतुष्टयम् ।
तत्पत्न्यः क्रमशस्त्वेताः, सुविनीताः परस्परम् ॥ १९७॥ सर्वासु तासु लघ्व्येषा, स्नुषा मुख्या यदा गृहे । समायाति क्रमायाति-

स्तदा मान्या त्वया त्वियम् ॥ १९८ ॥ यदा किमपि सद्वस्तु, सा पश्येत् स्पृहयालहृत् । कञ्चुकादि तदा देयं, शाटिकाऽऽदि च कर्पटम् ॥ १९९ ॥ शालि–गोधूम–सद्धान्यं, तस्यै देयमवश्यतः । तदस्तु वस्तुतः श्लाघ्यं, यत् सतामुपयुज्यते ॥ २०० ॥ यतः—" सञ्चितं सुचितं यन्नो–पयुज्येत क्रतुष्वहे । याच्यमानं च यद् यत्नाद्, गुणवद्भ्यो न दीयते ॥ २०१ ॥ तत् कदर्यमदो द्रव्यं, रक्षितं मुख्यतापहम् । भुज्यते युज्यते वीरै–श्चौर–पार्थिव–शात्रवैः ॥ २०२ ॥" इति धन्यवचोवीच्या, सिञ्चितौ-चित्यपादपा । राजपुत्री धरित्रीव, तत्फलेग्रहितामगात् ॥ २०३ ॥ शाटिकाऽऽद्यं तदा दत्ते, तच्चित्तेनान्वितेव सा । राजपुत्री सुभद्रायै, सुभद्रायै गुणश्रिया ॥२०४॥ यदा सा दधि घोलं च, सद्धा(वा)ऽन्यं कञ्चुकादिमत् । समानयति सन्मान्या, तदा श्रेष्ठी वदत्यदः ॥ २०५ ॥ स्नुषैषा भाग्यभागस्ति, वधूवर्गे निसर्गतः । यदाऽसौ याति तक्राय, सद्वस्त्वानयते तदा ॥ २०६ ॥ इति श्रेष्ठिवचः श्रुत्वा, स्मित्वा चान्तरुशन्ततः । प्रोचिरे सातिरेकास्ता, वध्वस्तित्लोऽपि तं प्रति ॥ २०७ ॥ श्वशुर ! प्रसरत्प्रेम्णा, व्याख्यातो देवरः पुरा । विरागान्निरगात् सोऽपि, विदेशं गतवानतः ॥ २०८ ॥ इदानीमपि तत्पत्नी, यत्नीकृत्यतरां गिरा । व्याख्याय क्षणतः क्षीणा, तदनु प्रेषयिष्यते ॥ २०९ ॥ दिवा तु क्रियते कर्म, मृत्तिकावहनं महत् । निशायां शय्यते श्रान्तं, क्षितौ क्षतवपुर्लतम् ॥ २१० ॥ धूलिधूसरता धार्या, सुकुमार्याऽपि यत् तया । वर्ण्यते कर्णशूलं नो, वधूर्मे भाग्यभागिति ॥२११॥ तद्वाचा मौनमासीने, श्रेष्ठिनि व्यर्थचेष्टिनि । वध्वो वारेण तक्राय, यान्त्यायान्ति च नित्यतः ॥ २१२ ॥ ततः परिचयौचित्य–प्रस्तावे प्रस्तुते सति । धन्यः प्राह सुभद्रां च, वदान्यः सदनागताम् ॥ २१३ ॥ मृगाक्ष्याख्याहि भो भद्रे !, सुभद्रे ! स्वां कथां मम । का त्वं तत्त्वतया केन, हेतुना किमिहाहिता ? ॥ २१४ ॥

इत्थं धन्योदिते सद्यः, सज्जलज्जदधोमुखी । भूते स्म विस्मयस्मेरं, वचस्तच्छ्रवणामृतम् ॥ २१५ ॥ दैवं पृच्छेच्छया तुच्छं, स्वच्छन्दच्छन्नवत्सलम् । किं मां पृच्छसि हे स्वच्छ !, कर्मकर्दमकच्छपीम् ? ॥ २१६ ॥ दैवमेव बलीयोऽस्तु, राज–रङ्कसमक्रमम् । यज्जगज्जन्तुसन्तानं, नटवन्नटयत् पटु ॥ २१७ ॥ शालिभद्रस्वसा साऽहं, भद्रा–गोभद्रनन्दिनी । निन्दनीया जने जज्ञे, मन्ये पुण्येन वर्जिता ॥ २१८ ॥ भवतामभिधाभाजा, वरेण श्रेष्ठिसूनुना । परिणीताऽहकं भूप !, धनपालसुतासुता ॥ २१९ ॥ कर्मणा कारणात् कस्मा–दकस्मात् कलहे सति । भ्रातॄणां मत्सरोच्छे(त्से)के, सज्ञाते श्रीविघातिनि ॥ २२० ॥ मद्भर्तरि गते क्वापि, जातमीदृगनीदृशम् । निरोधो गृहकुम्भेभ्यः, पयोऽपि क्षपयेदह ! ॥ २२१ ॥ यथावृत्ते तयेत्युक्ते, निर्मुक्ते मान–मायया । दध्यौ धन्यो धिया साधु, बहुरत्ना वसुन्धरा ॥ २२२ ॥ ततः पुनरपि प्रोचे, धन्यो नैपुण्यपुण्यधीः । भद्रे ! तव पतिर्यातो, दूरदेशान्तरं परम् ॥ २२३ ॥ स त्वां विना यदि क्वापि, मृतः स्यादथ जीवति । देशान्तरं नृणां प्रायः, प्रत्यूहव्यूहतावहम् ॥ २२४ ॥ कथं भर्त्रा विना तन्वि !, त्वं तिष्ठसि वियोगिनी ? । स्त्रीणां तु पतिरेवात्र, सर्वत्र सुषमासुखः ॥ २२५ ॥ यद्वद् रात्रिर्विना चन्द्रं, दिनश्रीर्दिनपादपि । शस्तैर्न शस्यतेऽवश्यं, तद्वत् स्त्रीर्दयिताद् ऋते ॥ २२६ ॥ ततः पतिव्रतं त्यक्त्वा, मुक्त्वाग्रहकदाग्रहम् । भुङ्क्ष्व भोगानथो मङ्क्षु, मद्गृहे स्वामिनी भव ॥ २२७ ॥ तद्वचोऽनुचितं श्रुत्वा, साऽपि व्यापितदुर्नयम् । वज्रघातोद्धतस्यान्त–र्पर्वतस्यापि सर्वतः ॥ २२८ ॥ कर्णौ पिधाय पाणिभ्या–मिभ्यसूरभ्यसूयया । दोद्र्याज्ञकुपी चक्र(क्र)–नक्रमोटनकृत् ततः ॥ २२९ ॥ शान्तं पापमिति प्रोच्य, शोच्यतामोच्यरुच्यधीः । साशङ्का पङ्कनिर्मुक्त–मदः पद्यं जगाद सा ॥ २३० ॥ उक्तं च—" गतियुगलकमेवोन्मत्तपुष्पोत्करस्य, विनयनतनुपूजा चाथवा भूमिपातः । निमलकुलभवानामङ्गनानां

शरीरं, पतिकरजरजो वा सेवते सप्तजिह्वः ॥ २३१ ॥ " पाठान्तरम्–" गतियुगलमलं स्यात् काञ्चनद्रोः सुमानां, मनसिजरिपु-पूजा वाऽथ पृथ्वीनिपातः। विमलकुलभवानामङ्गनानामिहाङ्गं, पतिकरजरजो वा सेवते वा हुताशः ॥ २३२ ॥ " सिंहस्य केसरं सारं, सत्याः पीनोन्नतौ स्तनौ। शरण्यं सुभटश्रेणेः, शेषस्योरुशिरोमणिम् ॥ २३३ ॥ दन्तौ दन्तावलेन्द्रस्य, सुरेन्द्रस्य करा-शनिम्। सौरभं जीवितेशस्य, को ग्रहीतुमलं बलात् ? ॥ २३४ ॥ छिद्यतां मस्तकं यद्वा, भूयाद् वा साधुबन्धनम्। यातु लक्ष्मी-रमा प्राणै-र्न मुञ्चेयं पतिव्रतम् ॥ २३५ ॥ धन्यः साधुरसाधुस्त्व-मादधानो धनान्धधीः। यदृच्छावाञ्छकस्तुच्छं, वदसीति मदोध्दु(द्ध)तम् ॥ २३६ ॥ राज्यन्याय्यं परित्यज्य, मां प्रियीकर्तुमिच्छसि। पतिं विना न शक्तो मां, स्प्रष्टुं सुष्ठु शचीपतिः ॥ २३७ ॥ किं वा बहूद्यते सद्यः, स्वप्रशंसनपातकम्। सेन्द्रश्चन्द्रोऽपि नागेन्द्रो, नालं मे शीलहीलने ॥ २३८ ॥ इति तन्निश्चयं चित्ते, निश्चित्यौचित्यसत्यतः। चमत्कृतोऽन्तरत्यन्तं, साधुः सान्त्वनमाददे ॥ २३९ ॥ धन्यः साधुरथावक् तां, भद्रे! मा कुप्य भद्रधीः। कारणं च शृणु श्रव्यं, विद्यते यदवद्यमुक् ॥ २४० ॥ परस्त्रीलोलुपो नाह-मात्मना हितहेतवे। व्यसनाभ्यसनो नापि, कापि पापपरायणः ॥ २४१ ॥ इदं च वचनं प्रोचे, वाह्यवृत्तिप्रवृत्तितः। किन्तु मन्तुविनिर्मुक्तं, सत्त्वं तव परीक्षितम् ॥ २४२ ॥ क्षन्तव्यं तत् त्वया दक्षे!, क्षमावत्या क्षमत्वतः। परीक्षा तु सतां सत्त्व–कल्याण–कषपट्टिका ॥ २४३ ॥ त्वां पृच्छामि परं स्वच्छे!, ब्रूहि सुभ्रु! सविभ्रमे!। जानासि त्वं कथं कान्तं, नितान्तस्वान्तसङ्गतम् ? ॥ २४४ ॥ किं वा कस्मादभिज्ञानाद्, दर्शनादथवा दृशोः ?। यथा विबुध्यसे बुद्ध्या, मत्पुरस्तन्निवेदय ॥ २४५ ॥ साऽऽह साधो! विजाने त्वां, सङ्केतेन वरं परम्। दृष्टं च वेद्मि वा वेष-परावर्त्यपि साम्प्रतम् ॥ २४६ ॥ सोऽवदत् तर्हि सङ्केतं, समाकर्णय वर्णिनि!। श्रीश्रेणिकस्य जामाता, धन्यो-

ऽभूद् धनसारभूः ॥ २४७ ॥ रात्रौ प्रियानय त्यक्त्वा, तत्र राजगृहे गृहे । गात्रमात्रो विनिर्गत्य, समागादत्र चित्रदः ॥ २४८ ॥ युग्मम् ॥ सङ्केतवचनं श्रुत्वा, मत्वा प्रियमधिश्रियम् । दृशा प्रेमस्पृशा दृष्ट्वा, सुभद्रा भद्रभूरभूत् ॥ २४९ ॥ धन्यम्मन्या पतिं धन्य–मवेत्य प्रीतचेतसा । त्रपाभाववशा नम्र–वदना सा मुदं दधौ ॥ २५० ॥ चक्राकी यथेनार्कं, चकोरी चन्द्रमण्डलम् । मयूरी वारिदं दृष्ट्वा, हृष्टा तं वीक्ष्य सा तथा ॥ २५१ ॥ अथ वासोदरे नीत्वा, राजपुत्र्या त्रपावतीम् । धन्यः सम्मानयामास, प्रियेयं मे प्रकाश्य सः ॥ २५२ ॥ शीर्णे वस्त्रे परित्याज्य, प्राज्यहर्षप्रकर्षतः । दिव्यवस्त्राश्रिता चक्रे, शक्रेणेव शची रुचा ॥ २५३ ॥ विभूष्य भूषणश्रेण्या, वेण्याद्या पदसम्पदः । सत्कृत्य स कृती प्रोचे, त्वं गृहस्वामिनीति ताम् ॥ २५४ ॥ समजनि जनमान्यः सीतया रामचन्द्रः, सपदि च दवदन्त्या श्रीनलक्षोणिपालः । सकलसहजपूज्यः कृष्णया धर्मसूनुः, समु(सु)रसुरमिवासीत्, कान्तया धन्य एवम् ॥ २५५ ॥ इति धन्यमहापुण्य–नररत्नशिरोमणेः । जिनधर्म–जयानन्दः, प्रस्तावस्तृतीयोऽभवत् ॥ २५६ ॥

**इति श्रीधन्यचरिते स्वकर्मपरीक्षार्थकौशाम्बीप्राप्ति–रत्नपरीक्षा–राज्याङ्गप्राप्ति–राजपुत्रीपरिणयन–स्वकुटुम्बमिलन–सुभद्रोपलक्षणोपाख्यानवर्णनो नाम तृतीयः प्रस्तावः ॥ ३ ॥**

## अथ चतुर्थः प्रस्तावः ।

अथ सुपृथुलभाग्यश्रीप्रियाश्रीश्वरस्य, प्रविदितिमतिजाते वल्लभातुल्ययोगे । सुपमसुखमुखस्य श्रेयसा धन्यसाधो–रपरतरकुटुम्ने यत् त्वभूत् कथ्यते तत् ॥ १ ॥ तथा चोक्तम्—" स्थाने निवासः सुकुलं कलत्रं, पुत्रः पवित्रः स्वजनानुरागः । न्यायस्थवित्तं

गुहितं न चित्त, निच्छद्मधर्मस्य सुखानि सप्त ॥ २ ॥" पुनश्च—"सविनयास्तनया दयिता हिता, नयभवो विभवो निपुणा गुणाः।
वपुरनापि मनाधिरि(र)तिर्नृणां, शुभतरोः प्रथमाङ्कुरका अमी ॥ ३ ॥" "दानेन विश्वानि वशीभवेयु–र्दानेन वैराण्यपि भङ्गभाञ्जि।
परेऽपि दानेन सुवन्धवेयु–र्दानं हि सर्वव्यसनप्रणाशि ॥ ४ ॥" इतश्च श्रेष्ठिना सुष्ठु, दृष्ट्वा वर्त्म वधूवियौ(धौ)। द्वितीयिका स्नुषा-
ऽमापि, प्रायः शङ्कितचेतसा ॥ ५ ॥ वत्से! विच्छेदमादाय, सुभद्रां द्राग् विलोकय। वेलाविलम्बः सञ्जातः, कुतश्चिद्धेतु–सेतुतः
॥ ६ ॥ वक्रतापनिकां लात्वा, तमुप श्वशुरेरिता। धन्यगेहमगाद् वेगात, सुभद्रासंदिदृक्षया ॥ ७ ॥ तत्र गेहाङ्गणे गत्वा, निरी-
क्षितस्तवः क्षणम्। स्तम्भमध्यर्पुचेटीव, चिरण्टी टीकतेऽचिरम् ॥ ८ ॥ पुनर्मण्डपमध्येऽगाद्, गर्भगेहे ददे दृशौ। तत्राद्राक्षीन्मृगाक्षीं
तां, दिव्याभरणधारिणीम् ॥ ९ ॥ ततः सत्वरमागत्या–ऽऽतुरचेतस्विनी सका। श्रेष्ठिने ज्ञापयामास, तं वृत्तान्तमशेषतः ॥ १० ॥
तच्छ्रुत्वा श्रवणश्रेणि–तप्तत्रपुनिभं वचः। वज्राहत इव श्रेष्ठी, पौनःपुन्येन दूनवान् ॥ ११ ॥ स किंकर्तव्यतामूढः, प्रौढोऽपि दृढ-
धीरपि। क्षणमास्थाय विच्छाया–ऽऽशयश्चिन्तितवानिति ॥ १२ ॥ अनया कुनयाचार–वत्या हत्यासमं नियाम्। किमाचरितमाचार-
परिहीनं कुलस्त्रिया ? ॥ १३ ॥ जने जन्येन धन्येन, पांशुने(ले)नेव साधुना। प्रसह्यारुह्य रागाद्रि–मपजह्रे ह्रिया विना ॥ १४ ॥
तत् मर्म स्वकुटुम्बाय, ज्ञापयित्वा ममत्वतः। तं वृत्तान्तं द्रुतं गत्वा, व्याहरद् व्यवहारिणाम् ॥ १५ ॥ तेऽप्यूचिरे चिरेणेति, तं
निभृत्य हृदा तदा। नायं कुमार्गसंसर्गी, निसर्गगुणवर्गणः ॥ १६ ॥ अद्याद्यागमतः पूर्व–मत्रस्थस्यास्य सर्वशः। दृष्ट्या न दृष्टं
न श्रुत्वा, श्रुतमन्यायवर्तनम् ॥ १७ ॥ युग्मम् ॥ गीतेषु गीयते चेति, परनारीसहोदरः। पुण्यवन्मानवाग्रण्यो, धन्यः साधुरहो!
महान् ॥ १८ ॥ साम्प्रतं भवता तय्ये–त्थं स्वरूपं प्ररूप्यते। विपरीतमिदं कस्मात्, कारणाद् गण्यतेऽन्वणु ? ॥ १९ ॥ तथापि ज्ञाप-

यिष्याम-स्तं गत्वा सत्त्ववत्सलम् । विनयेन नयेनापि, विज्ञप्याः स्वामिनः पुनः ॥ २० ॥ विसृज्य श्रेष्ठिनं शिष्ट-वाण्यास्ते वणिजोऽञ्जसा । गत्वा नत्वा च तत्रान्न-बोधाद् धन्यं व्यजिज्ञपन् ॥ २१ ॥ धन्यस्त्वं पुण्यनैपुण्य-पण्यवाकुत्रिकापणः । विशेषाद् राजजामाता, माता-पित्रोः समः सताम् ॥ २२ ॥ न चेदं युज्यते पूज्य-पूजनीयस्य ते सतः । परस्त्रीहरणं शस्त्री-समं न्यायलतातते: ॥ २३ ॥ यतः—" यदि सूर्यात् तमो भूपा-चन्द्राच्चाग्निकणोच्चयः । समुद्रात् सीमविद्राव-स्ततो लोकस्य का गतिः ? ॥ २४ ॥" तेषामिति वचश्चञ्चच्चामराभं श्रुतिश्रियोः । श्रुत्वा बहुश्रुतः किञ्चित्, स्मित्वा चान्तरधान्मुदः ॥ २५ ॥ अशृण्वन्निव निर्धृत्या-कारगोपनमन्तरा । वार्त्तान्तरं तदाऽऽरेभे, धन्यः साधोरधीश्वरः ॥ २६ ॥ ततो धन्यमनो ज्ञात्वा, तत्त्वज्ञा अपि तेऽज्ञवत् । गृहं ययुः 'स्पृहाहीना, सेवा स्वामिसुखा खलु' ॥ २७ ॥ तत्स्वरूपं तथाऽरेत्य, चिन्तासन्तापशानसौ । स्वयं गत्वा स्वविज्ञप्ति-माधाद् धन्यपुरो गुरुः ॥२८॥ "दुर्बलानां बलं राजा, बालानां रोदनं बलम् । बलं मूर्खस्य मौनत्वं, तस्करस्यानृतं बलम् ॥ २९ ॥" अन्यायं तनुते योऽन्य-स्तद्दण्डः क्रियते त्वया । तदन्यायमनादृत्य, वधूं मुञ्च ममोत्तम ! ॥ ३० ॥ ततो भिन्नमना धन्यः, पितृप्रेमसुधारसैः । महानाचष्ट विस्पष्टं, श्रेष्ठिने दीयतां वधूः ॥ ३१ ॥ ततस्ते श्रेष्ठिनं श्रेष्ठ-मुपादाय तदग्रतः । सौधान्तरनयन्निद्धं, शुद्धान्तमिव सम्पदाम् ॥ ३२ ॥ अथोत्थाय हृतापाय-मह्वायेष्टस्य पृष्ठ(ष्ठ)तः । गत्वा नत्वा पितुः पादौ, स प्रोचे प्राचदञ्जलिः ॥ ३३ ॥ सप्रसादैः पितृपादैः, सुराग्रादैर्विदां पदैः । क्षन्तव्यं नव्यभव्यत्वा ! मत्कृतं दुष्कृतं त्वदः ॥ ३४ ॥ इदं साधुवचः श्रुत्वो-पलक्ष्य च सुतं स तम् । प्रोत्फुल्लवदनाम्भोजो, जज्ञे श्रेष्ठी महिष्ठमुत् ॥ ३५ ॥ हर्षप्रकर्षसंतर्प-पर्यत्पोषितमानसः । पत्नी-पुत्रादिकं पश्चाद्, न्यस्मार्षीत् सुखवच्च सः ॥ ३६ ॥ प्रविष्टे चोपविष्टेऽथ, मध्ये श्रेष्ठिनि सत्मनः । धन्यमाता तथैत्राऽऽगाद्, रागाद् रात्राविधित्सया

॥ ३७ ॥ सा वयाक्षरविन्यास–भाषातुं तत्पुरोऽब्रवीत् । गृहीता मद्धृरादौ, त्वया न्यायवताऽस्तु तत् ॥ ३८ ॥ मत्कान्तोऽपि हृतः
कस्मा–दमन्तुनन्तुमागता(तः) । तं दर्शय विमर्शार्ह ! निस्त्राणत्राणनैपुणः(ण !) ॥३९॥ मात्रेत्यकृत्रिमे प्रोक्ते, सम्पृक्ते सूक्तियुक्तिभिः ।
धन्यः सम्मुखमागत्य, नत्वा स्वाम्यां ननाम ताम् ॥ ४० ॥ समायाताः क्रमेणेति, भ्रातरस्ते त्रयोऽपि हि । पञ्चाङ्गाश्वत्प्रणामेन
ते प्रत्येकं प्रणेमिरे ॥ ४१ ॥ एवं कलत्र–सत्पितृ–मातृ–भ्रातृसमागमे । धन्येन सत्रा सञ्जाते, यज्जातं तत् प्रतन्यते ॥ ४२ ॥ यदा
देवरभार्या सा, श्वश्रू–श्वशुरकौ वराः । नारुः कारणतोऽभूवन्, भ्रातृजायास्तदाऽऽकुलाः ॥ ४३ ॥ सर्वाः सम्भूय ता भूयो, धन्य-
द्वारमयास्थिताः । पूत्कुर्वन्त्यो राव–मिति तारं परस्परम् ॥ ४४ ॥ नियतेर्ज्ञायते नैव, किं भविष्यति दुःखदम् ? । राजसौधमिदं
प्रायः, स्त्रीजनस्यास्ति दुर्गमम् ॥ ४५ ॥ संलप्येति मृशं द्वाःस्थाः, दुःस्थास्ताः करुणस्वरम् । स्थित्वा यामं मियोद्दामं, समादुः
स्वकुटीरकम् ॥ ४६ ॥ त्रियामां शतयामां वा, दुःखाभीत्या विषादतः । प्रभाते तास्तु सम्भूय, शतानीकसभामयुः ॥ ४७ ॥
विनिग्रमन्त्रि–सामन्त–सन्धिपाल–भटोद्भटाम् । श्रेष्ठि–श्रेष्ठगुणज्येष्ठ–विशिष्टविबुधाधिकाम् ॥ ४८ ॥ किं बह्विन्द्रसभाशोभां, सभां
सम्प्राप्य ताः स्त्रियः । ऊचुः राज्ञो महीन्द्राग्रे(ग्रे), धन्यान्यायविवक्षया ॥ ४९ ॥ युग्मम् । प्रतापजितमार्तण्डमण्डलद्युतिमण्डल ! ।
न्यायवल्लिरनाम्भोद–मोदरस्वकरोत्कर ॥५०॥ मातृपितृ[त्त]मस्वामि–न्नुर्वी सर्वा सुम(समु)चये । जीवेत्याशीर्वशाः प्रोचुः, शतानीकं तु
ता वशाः ॥ ५१ ॥ चिरं विरञ्जिनञ्जीव, चिरं नन्द च नन्दयन् । चिरं राज्यं भजन् स्वैरं, सुचिरं पालय प्रजाः ॥ ५२ ॥ श्रीमद्रा-
खिललोकानां, कल्पद्रु–मणि–धेनुवत् । समीहितं हितं तन्वन्, सौराज्यं कुर्वखण्डितम् ॥ ५३ ॥ इत्याशीर्वचनाम्भोद–सुन्दरोदक-
वृष्टिभिः । अभिषिच्य क्षमाधीशं, विज्ञप्यं ता व्यजिज्ञपन् ॥ ५४ ॥ वयं कर्मकरत्वेन, किङ्करत्वेन वा विभो ! । वित्ताभावादिहा-

याता, निरातङ्के भवत्पुरे ॥ ५५ ॥ यत्र तत्र विचित्राणि, कृत्वा कर्माणि जीनवत् । वर्तनायायतोद्योगा, देव! वर्तामहे महन्! ॥ ५६ ॥ धन्येन साधुना साधु, नाधुना विधिनाधिना । प्रथमं प्रथमन्दाक्षा, देवास्मद्देवरप्रिया ॥ ५७ ॥ तदनु श्वशुरः श्वश्रू–रस्मदीया वरा वराः । वराका वा कुटुम्बाख्या, ह(ह)तं सर्वमिदं मदात् ॥ ५८ ॥ तत् कुटुम्बमिदं मन्दं, मन्दं विश्वस्तमस्तहृत् । घारितं मारितं वाऽरं, जीवितं वाऽवितं मत ! ॥ ५९ ॥ शोधयित्वा नयाम्भोधे !, बोधयित्वा ममत्वतः । अस्माभिर्मेलयानालं, लोकपालोऽसि पञ्चमः ॥ ६० ॥ युग्मम् । इत्यादि तद्वचः श्रुत्वा, श्रोतव्यं मव्यमूभृताम् । नीत्या गीत्या क्षमाध्यक्ष[:], सामधाम स्वबन्दिनम् ॥ ६१ ॥ धन्यपार्श्वे ततो मङ्क्षु, प्रेक्ष्य(ष्य) प्रेक्षावतां वरम् । समासात् कथयामास, मुश्चेमान् मानुषानिति ॥ ६२ ॥ धन्यसाधुरथाऽऽह स्म, बन्दिनं युक्तिबन्दिनम् । निषेदय नृपं गत्वा, नाहमन्यायमत्पुमान् ॥ ६३ ॥ करोमि चेन्निरोधेन, तर्हि किं तव भूभृता ? । प्रायः स्वेच्छा महेच्छानां, निरोद्धुं केन युध्यते ? ॥ ६४ ॥ तत् सर्वमुर्वीशाया–ऽऽगत्य बन्दी न्यवीविदत् । स्वखर्वगर्ववचनात्, क्रोधाध्मातः क्षमाधवः ॥ ६५ ॥ शतानीकः क्षतानीकः, कृतनीकर्मकर्मठः । धन्यं जामातरमपि, शत्रुक्षत्रमिवैक्षत ॥ ६६ ॥ सैनिकान् कांश्चिदादिश्य, धन्यं हन्तुं समन्तुकम् । प्रैषी द्वेषीव तत्पेषी, भीषयन्निव दुःखलान् ॥ ६७ ॥ युग्मम् । धन्योऽपि रोपितौचित्य–मित्यपेत्य हृदा तदा । विरोधो भूभुजा जातो, दुर्निरोधो महाधिया ॥ ६८ ॥ ततोऽहमपि सामग्री–मङ्गीकृत्य युधोचिताम् । तिष्ठामि शिष्टनीत्येपक्षोपेक्ष्यः खलु विद्विषन् ॥ ६९ ॥ ध्यात्वेति दूतेराज्ञाप्य, ग्रामपञ्चशतादतः । सुभटान् कटकान्वितान्, संनह्य स्थितवान् स्वयम् ॥ ७० ॥ समायाताः शतानीका–नीकयोधा महाक्रुधा । तैः सार्धं समरो जज्ञे–ऽसमरोपं शराशरि ॥ ७१ ॥ धन्यः पुण्यप्रभावारि–र्भावनाभिरभि प्रभुम् । भमाः पलायितुं लमा सुमास्याः शतशस्ततः ॥ ७२ ॥ भग्नं कटकमा-

टीभ्य, सप्टङ्गाद् विकटं नृपः । स्वयं युयुत्सुरायासी-दनुदासीनविक्रमः ॥ ७३ ॥ सर्वाभिसारसंरम्भं, प्रारम्भाज्जम्भकारिवत् ।
धन्यं दानवमामन्त्य, समन्युरुदभूद् युधे ॥ ७४ ॥ गृहरक्षामतो मङ्क्षु, कृत्वा धन्यो निजैर्भटैः । स्वसैन्यमन्यमादाय, निर्ययौ
नगराद् बहिः ॥ ७५ ॥ रणक्षेत्रमथाग्रस्य, सुत्रामसमविक्रमौ । क्रमौचित्यं विना स्वैर-मसूत्वरचरत्वरौ ॥ ७६ ॥ राम-रावण-
वद् विष्णु-जरासन्धाविवोद्धरौ । युधिष्ठिर-कुरुमरुया-विव मुख्यौ विशेषतः ॥ ७७ ॥ कल्पान्तभ्रान्तपाथस्का-विव वार्धी
परापरौ । वीक्ष्य दस्यविलक्ष्याक्षा वीक्षाऽपन्ना इवाभवन् ॥ ७८ ॥ किं भावि भवितव्येन, द्वयो राजन्य-धन्ययोः । किङ्कर्तव्य-
तया मूढाः, प्रौढा इव इडौकिरे ॥ ७९ ॥ चतुर्भिः कलापकम् । अत्रान्तरे वरामात्यै-रेत्य जात्यैर्धियेद्धया । परस्परं विमृश्याशु,
विज्ञप्तं भूपतेः पुरः ॥८०॥ हे नाथ ! न्यायपाथोधे !, दीर्घदर्शिशिरोमणे ! । जामात्राऽमात्र(त्र)तः सत्रा, न युद्धं युज्यते तव
॥ ८१ ॥ धन्यस्त्वद्दुहितुः प्रेष्ठा-स्त्वयाऽपीनास्ति मानितः । वर्धितो पृथग्वद् दाक्ष्यात्, स्वयं छेत्तुमसाम्प्रतम् ॥ ८२ ॥ नाप्ययं
दुर्णयाभ्यर्णः, कदाचिदपि दृश्यते । धीनिधिस्तु स्वयं शम्भ-न्मर्यादायादसाम्पतिः ॥ ८३ ॥ कारणं गण्यते किञ्चित्, स्त्रीणां पार्श्वे तु
पृच्छ्यते । विविधाभिप्रदाः प्रायो, गवयः कर्ममर्मणा ॥ ८४ ॥ अथामात्यैर्नृपाज्ञप्त्या, गत्वा पृष्टास्तकाः स्त्रियः । धन्याह्वः स्वजनो
बन्धु-र्देवरो वाऽस्ति कश्चन ? ॥ ८५ ॥ प्रोचुस्ता देवरोऽस्माकं, पुरा धन्याभिधोऽभवत् । गृहान्निर्गत्य कुत्रापि, मृतो वाऽथ स
जीवति ॥ ८६ ॥ भीसर्तेः प्रोचिरे तास्तु, लक्ष्म वित्थ तस्य किम् ?। देहजं स्नेहजं वाऽपि, येन स प्रकटो भवेत् ॥८७॥ प्राहुस्ता
देवरो नः स, बालोऽभूत् पुरा यदा । तदा प्रक्षालनाद् दृष्टौ, पद्माङ्कौ तत्पदौ मुदा ॥ ८८ ॥ मन्त्रिभिश्च ततः प्रोचे, चिह्नेनाहेतुनाऽधुना।

प्रक्षाल्येतां पुनः पादौ, देवरो विधवे यथा ॥ ८९ ॥ ततः सरोवरं जग्मुः, साकं ता मन्त्रिभिर्द्रुतम् । धन्योऽप्याकारितस्तत्र, बहु विज्ञप्य सत्वरम् ॥९०॥ भ्रातृजाया भृताशाया वीक्ष्य धन्योऽनमत् पुरा । गिरा सुधाकिरा ताश्च, भाषते स्म सुभाषणः ॥९१॥ किमर्थमागता यूयं, किमस्माभिः प्रयोजनम् ? । विनाऽर्थं कोऽपि नायाति, नाकारयति कश्चन ॥ ९२ ॥ प्रोचुस्ता देवरोऽस्माकं, प्राणेभ्योऽप्यतिवल्लभः । न प्रीणयसि नः कस्मात् , पूर्ववन्नर्मसम्पदा ? ॥ ९३ ॥ धन्योऽवक् किं भ्रमो वोऽत्र, किं वा चित्तविपर्ययः ? । गार्थल्यग्रथना वाऽस्तु, वस्तु स्त्रीत्वस्वभावतः ? ॥ ९४ ॥ योऽतिप्रीतोऽस्ति वो धन्यः, स त्वन्यो मन्यतां ननु । श्रुतो राजगृहेशस्य, सुतापतिरिति श्रुतिः ॥ ९५ ॥ तास्तिस्रोऽपि पुनः प्रोचु–रनुच्चैर्वचनाञ्चनाः । स नु(तु) विज्ञायतेऽस्माभि–र्लक्षणेन विचक्षणः ॥ ९६ ॥ लक्षणं लक्ष्यते मुख्यं, देवरस्य क्रमाम्बुजे । तत् तत् प्रक्षाल्य ते भक्त्या, ज्ञास्यामो निजदेवरम् ॥ ९७ ॥ धन्यः प्रोचे परस्त्रीणां, स्पर्शः पातकजातकृत् । तत्रा परस्त्रिया नाहं, भाषे का स्पर्शसंकथा ? ॥ ९८ ॥ तेनेत्युक्ते ह्रिया व्यक्ते, तास्तूष्णीमालम्बिरे । परायत्ते पुनर्यत्ने, किं करोति महानह ? ॥ ९९ ॥ मन्त्रिभिस्तु धिया बुद्ध्वा, परमार्थपरिस्पृशा । स एव देवरोऽस्त्यासामेष वेषान्तरापरः ॥ १०० ॥ मन्त्रिणस्तमथ प्रोचु–र्धन्यमन्येतरं गिरा । मा खेदय दयापाद !, भ्रातृजाया निजा मुधा ॥ १०१ ॥ इत्याद्यमात्यसम्प्रोक्ते, स्नेहार्द्रः स्वयमप्ययम् । तदा स्वं निदितीकृत्य, भ्रातृपत्नीर्ननाम सः ॥ १०२ ॥ सहसा मधुरोदार–गिरा प्रीतिक्रिता चिरात् । समानन्द्य तदाऽऽशु स्वं, मन्दिरं प्रैषयत् खलु ॥ १०३ ॥ अथ सैन्यसमारम्भ–प्रारम्भं प्रोज्झ्य तत्परम् । द्रुतं ग्न्यायवौ प्रीत्या–ऽऽयत्या विनयवामनः ॥ १०४ ॥ राजाऽप्याजावुपा(दा)सीनो, धन्यमुद्वीक्ष्य दक्षिणम् । सिंहासनार्धदानादि, दत्त्वा गौरवगौरवम् ॥ १०५ ॥ जगाद सादरं सद्यः, सुधास्वादास्पदं पदम् । ' सन्तो हि सत्समायोगेऽ–पयोगे मधुरा गिरा '

॥ १०६ ॥ युग्मम् । धन्यसाधो ! धिया साधो !, सुन्दरेण वरेण च । भ्रातृजायांस्त्वयाऽपाया:, खेदिताः सुचिरं किमु ? ॥१०७॥ धन्योऽवोचद् वचस्तथ्यं, पथ्यं राज्ञः पुरः परम् । श्रूयतामवनीनेतः !, सर्वसाधारणं वचः ॥ १०८ ॥ " बन्धूनां स्नेहनद्धानां, च्युतिर्नारीं विना न वै । तालकं यद् द्विधाऽऽदध्यात्, कुञ्चिकाऽन्तरुपाश्रिता ॥ १०९ ॥ " ' स्त्रीणां दुर्वचनैर्देव !, स्युर्द्विधा बान्धवा जवात् । ' तत्परीक्षेक्षया भ्रातृ-जायास्त्वाखेदिताः खलु ॥ ११० ॥ यथा—" स्त्रीणां कृते भ्रातृयुगस्य भेदः, संभिन्नभेदे क्षिप एव मूलम् । अप्राप्तकाले बहवो नरेन्द्रा, नारीभिरुच्छेदितराजवंशाः ॥ १११ ॥ " परमेता मम भ्रातृ-कान्ताः शान्तवचोऽन्विताः । न कदापि द्विधाऽऽधायि, वचोऽवोचन् परस्परम् ॥ ११२ ॥ " परीक्षितं हि सद्वस्तु, क्षमते क्षेममक्षतम् । अतो नराश्च नार्यश्च, सुपरीक्ष्या विचक्षणैः ॥ ११३ ॥ " इत्याद्यासादितासाद-प्रीतिसंवादसादरौ । तस्थतुः क्षितिभृद्-धन्या-धन्योऽन्यं मान्यतामितौ ॥ ११४ ॥ विसृज्याथ कृतार्थं तं, धन्यं स्वावासवस्तुने । स्वयं स्वान्तःपुरं प्राप, हर्षोत्कर्षसुखो नृपः ॥ ११५ ॥ धन्योऽपि धाम चागत्य, नत्या नत्वा यथोचितम् । तातादिकांस्तदा सर्वा-न्नतिप्रीताशयस्ततः ॥ ११६ ॥ पप्रच्छातुच्छवात्सल्यं, वृत्तान्तं भ्रूवपूर्वकम् । पुरावननिकेतस्थं, प्राञ्जलिर्हेलितालिकः ॥ ११७ ॥ युग्मम् । प्राह श्रेष्ठी गुणज्येष्ठ !, श्रूयतां वत्स ! वत्सल ! । तदा निर्निर्गतेऽकस्मात्, सधनस्त्वयि सत्वरम् ॥ ११८ ॥ जामातृस्नेहसम्मोहात्, सम्भ्रमं प्रकल्प्य च । कुपितो नृपतिः क्षिप्तं(प्रं), श्रेणिकः स्वजनोऽपि सः ॥ ११९ ॥ सर्वस्वं जगृहे हन्त !, गृहाद्यं च तदा नृपः । ' किमभाग्योदये पुंसां, विपरीतं न जायते ? ' ॥ १२० ॥ यदुक्तं च—" पल्लवं ज्वलति शुष्यति शाखी, मर्मरं वपुषि वर्षति चन्द्रः । वासरः सृजति रात्रिविभागं, भाग्यभङ्गसमये हि जनस्य ॥ १२१ ॥ " जल-स्थलगतं द्रव्यं, व्यवहारोचितं यतम् । कलान्तरगतं यच्च, तद् विनष्ट-

मशिक्षितः ॥ १२२ ॥ देशे देशान्तरे चापि, यदभूद् भीतिहेतुकम् । तत् सर्वं भूतिवद् वाता–दुर्दीनं कर्ममर्मणः ॥ १२३ ॥ युग्मम् । दरिद्रे क्षुद्रतासान्द्रे, समुद्रेकात् समागते । गृहे मुद्रामथाहत्य, निराकृत्यान्यकृत्यताम् ॥ १२४ ॥ रजनीं व्यञ्जनीकृत्य, स्वजनादिविनादितः । निर्गत्याचकुटुम्बोऽपि, समायातोऽत्र सत्रपम् ॥ १२५ ॥ अत्रायाते यथा जाते, वर्त्तना–वृत्तिवृत्तये । तत् सर्वं भवता वत्स !, ज्ञायते ज्ञाप्यते किमु ? ॥ १२६ ॥ धन्योऽसामान्यसौजन्य–पाञ्चजन्यजनार्दनः । यत्चकाराथ सत्भायः, श्रूयतां कथ्यते हि तत् ॥ १२७ ॥ त्रयाणामपि बन्धूनां, सिन्धूनामिव चन्द्रमाः । ग्रामपञ्चशतीवेला–विलासमतनोत् स तु ॥ १२८ ॥ गृहसारं तदाऽपारं, पारम्पर्यादितः पितुः । तत् सर्वं जनकायत्तं, वित्तं चाचीकरत् स च ॥ १२९ ॥ इति द्वयेऽपि संरोप्य, कार्यभारमनारतम् । पत्नीद्वैतयुतस्तस्मा–न्मुत्कलाप्य नृपादिकान् ॥ १३० ॥ प्रति राजगृहद्रङ्गं, सद्रङ्गं प्रचचाल च । सुखेन चतुरङ्गेन, सैन्याङ्गेन सुसङ्गतः ॥ १३१ ॥ क्रमाद् राजगृहासन्न–सीमामासाद्य वाच्यतः । वर्धापन्या सुवर्धाप्य, श्रीश्रेणि-कमहीमता ॥ १३२ ॥ महेन महता धन्यः, प्रवेशनपुरस्सरम् । पुरं प्रवेशितः सीता–पतिवत् पौरवीक्षितः ॥ १३३ ॥ युग्मम् । दानमानविधानेन, प्रधानेन धनर्द्धिभिः । स प्रजा रञ्जयामास, प्रजाव्रजनको निजाः ॥१३४॥ तत्रस्थः सुस्थितात्माऽथ,(य)मनपायमया-यतिः ( महेभ्यैरभिढौकिताः ) । परिणिन्ये पुनर्धन्य–श्रतसः कन्यकोत्तमाः॥१३५॥ रूप–लावण्य–लक्ष्मीभिः, समुद्राभाः समुद्रया । कलाकेलिकलाकेलि–कलाः कलिकलाधराः ॥१३६ ॥ बन्धुराबन्धुरा बन्धु–राजिता राजिताः श्रिया । महोत्सवमहोलग्ने, शुभलग्ने सुखार्थतः ॥ १३७ ॥ त्रिभिर्विशेषकम् । प्रियाष्टकयुतो धन्यः, शोभते स सुविस्मयम् । भूभुवःस्वस्त्रयीस्वामी, हरिवद् भरितः श्रिया ॥ १३८ ॥ तत्पत्न्यष्टकप्रयिष्ठा–भोगसंयोगयोगभृः । धन्यः सुखोद्भिदं लेभे, दोगुन्दकसुरेश्वरः ॥ १३९ ॥ धन्यस्य

धननाथस्य, यथार्थस्वाभिधाभुजः । ऐश्वर्यस्य धनोर्जस्य, सङ्ख्या नाख्यायि मुख्यतः ॥ १४० ॥
यस्य धर्मोऽस्ति विस्तीर्ण–दीर्णः पूर्वमयार्जितः । स सर्वेभ्यो महेभ्यः स्याद्, 'यतो धर्मस्ततो जयः' ॥ १४१ ॥
यदि जिह्वाऽयुतं तु स्याद्, वदने सदने गिराम् । अमरायुर्गिरां पत्यु–र्मतिर्वैभवभासुरम् ॥ १४२ ॥ प्रमादमदमुच्छिद्य,
सद्विद्याविदुरत्वतः। तद् धन्यपुण्यसौख्यक्ष्मां, वर्णयेयं सुनिर्णयम् ॥ १४३ ॥ युग्मम्। किं वर्ण्यते सकर्णैस्य, धन्यस्य स्पर्धिवैभवम् ?
सौभाग्यश्रीर्धनश्रीश्च, सौख्यश्रीर्मिश्रतामधात् (वेणिवद् गुणैः) ॥१४४॥ कर्पूरः पूरताम्बूले, चन्दने स्वर्णवर्णिका। रत्नं हेम्नि सिता क्षीरे,
धन्ये पुण्यं तथाऽद्भुतम् ॥ १४५ ॥ एवं धन्यस्य सत्यार्थ–नाम्नः पुण्यस्य नैपुणात् । प्रयाति कालः श्रेयःश्री–मिश्रीकरणकर्मठः
॥ १४६ ॥ ये वत्सदेशग्रामेषु, भ्रातरस्तन्नियोगिनः । ते यथा जज्ञिरे व्यर्था–स्तत्स्वरूपं प्ररूप्यते ॥ १४७ ॥ इतो धन्याग्रजन्मानः,
सन्माना दुर्मदिष्णवः । धनाढ्या ग्रामभूदाढ्याः, श्रीदर्पिष्ठास्त्वयीभवन् ॥ १४८ ॥ तद्ग्रामेषु समग्रेषु, निजाज्ञां ते स्वयीकृतन् ।
'सत्यं न जानतेऽज्ञानाः, खादन्तः खादितुं न वै' ॥ १४९ ॥ घनाघनो घनोऽप्याभूत्, समग्रे वत्सनीवृति । ग्रामपञ्चशतीं
त्यक्त्वा, तदाज्ञां निशतीमितः ॥ १५० ॥ तदभाग्यनियोगेन, वियोगेन शुभश्रियाम् । नाभूद् वर्षाप्रवर्षोऽत्र, 'भाग्याधीना घना
ननु' ॥ १५१ ॥ तल्लोका वृष्ट्यभावेन, दुःस्वभावेन सम्पदाम्। विमनस्कास्तिरस्कार–भाजो वाऽप्यभवंस्तदा ॥ १५२ ॥ तद्ग्रामा-
नस्वजीवातून्, जन्तूनिव दुरात्मनः । प्रोज्झ्य ग्रामान्वरानागुः 'ते देशा यत्र जीव्यते' ॥ १५३ ॥ अनिष्पन्नेषु, भिन्नेषु, तेषु
ग्रामेषु सर्वथा । तेऽभवन् निर्धना धन्य–बन्धवो विघसोपमाः ॥१५४॥ तेऽगुस्तातमथोद्विग्ना, भग्नाशा विवशाशयाः । पित्रा तिर-
स्कृता 'भाग्य–भङ्गादङ्गिविपर्ययः' ॥ १५५ ॥ लज्जासज्जास्त्रयो ते तु, हेतुहीना विना धनात् । मालवे मण्डले जग्मुः, सक्षुधां

शरणं स यत् ॥ १५६ ॥ आजीविकामथाधातुं, विधातुं कर्मनिर्मितिम् । वृषभान् वाहयन्तस्ते, ग्रामाद् ग्रामे पुरात् पुरे ॥ १५७ ॥ भ्रमन्तः परितो भ्रष्टा, विनष्टाशा ह्यनिष्टया। निर्भाग्याः सन्ति लाभाय, लोभभाजोऽभितो भुवम् ॥ १५८ ॥ तेऽथान्यदा मुदाऽपेता, लाभार्थग्रन्थिताशयाः । वाणिज्यव्याजतास्थित्यै, कृत्ये तूद्यतचेतसः॥१५९॥ गोधूमधान्यपण्येन, पौष्टिकानृषभानिति । भृत्वा राजगृहं जग्मुः, 'किं दूरं व्यवसायिनाम् ?' (वाणिज्यार्थमभीप्सकाः) ॥१६०॥ चतुष्पथमथास्थाय, स्थापयित्वा स्वपौष्टिकान् । विक्रीणन्ति पणीकृत्य, तत्कणानां क्रयाणकम् ॥ १६१ ॥ दैवादवसरे त्वस्मि-न्नकस्माद् विस्मयस्मयः । महोच्च(च्चु)ङ्गाश्वमारूढः, प्रौढः परिवृढो दृढः ॥ १६२ ॥ सोद्रेकानेकसच्छेक-सुविवेकजनावृतः । तत्रायातः श्रिया ख्यातो, धन्यः क्षितिपवेश्मतः ॥ १६३ ॥ युग्मम् । धन्यसत्कां श्रियं श्रेष्ठां, वीक्ष्योद्वीक्ष्य च नागराः । तद्बन्धूनां तमोधूना-मिव नीचैर्गतत्विषाम् ॥ १६४ ॥ लोकाः परस्परं प्रोचु-रुच्चकैरेव केवलम् । दैवेनाहो ! कृतं कस्मा-दन्तरं बान्धवेष्वपि ? ॥ १६५ ॥ युग्मम् । 'न कोऽपि प्रतिमल्लोऽस्ति, दैवस्यानश्वरस्य हि। ततो बलीय एवात्र, दैवमेव न चापरम्' ॥ १६६ ॥ क्व धन्यः पुण्यनैपुण्य-पाञ्चजन्यसरित्पतिः ! । क्वैते तद्बान्धवा दौस्थ्या-ऽवस्थाग्रस्था व्यवस्थया ? ॥ १६७ ॥ जनश्रुतिमिति श्रुत्वा, धन्यः श्रव्यां बहुश्रुतः । प्रविलोक्योपलक्ष्यापि, दक्षत्वाद् बान्धवांस्त-कान् ॥ १६८ ॥ विनीतस्तुरगात् तूर्णं, समुत्तीर्य समुत् ततः । स्वभ्रातृपादयोर्धन्यः, पपात ख्याततद्गुणः ॥ १६९ ॥ 'सत्सु सन्तस्तु ते सन्ति, बहवः क्षितिमण्डले । ये ह्यसत्स्वपि सन्तः स्यु-स्ते द्वित्रा धन्यसन्निभाः' ॥ १७० ॥ लज्जिता भ्रातरोऽत्यर्थं, धन्यं दृष्ट्वोपलक्ष्य ते । मौनमाददिरेऽमन्दं, लज्जाभाजां तदिङ्गितम् ॥ १७१ ॥ धन्यो महान् महाभक्त्या, युक्त्या सन्मान्य बान्धवान् । गृहीत्वा गृहमानेषी, मनीषी हि करोत्यदः ॥ १७२ ॥ तान् प्रति प्रकृतिप्रीति-र्वचमाऽन्वीवदत् मुदा । पूज्या मे वृद्धव-

न्युत्वात्, भरन्तो हि भवन्ति यत् ॥ १७३ ॥ लक्ष्मीरेषा गृहमदः, प्रभुत्वमतिभूतिभृत् । सर्वं मे भवदायत्तं, विलसन्तु लसन्तु च ॥ १७४ ॥ ' विस्तीर्णाऽपि न सा लक्ष्मी–र्लक्षणीया विचक्षणैः । भूयो भूयोऽपि सम्भूय, भुज्यते या न बन्धुभिः ॥ १७५ ॥ " " नीचतिर्यक्त्वेऽपि प्रायो, वर्णनीयो मनस्विनाम् । काकोऽपि रोपितप्रीते–र्जातिपोषाद् विशेष्यते ॥ १७६ ॥ " एवं धन्योदिते सयः, भ्रातृप्रीतिसुचेतसः । कियन्तो वासरानारात्, सधन्यास्तेऽवतस्थिरे ॥ १७७ ॥ इत्थं कियत्सु घस्रेषु, सुखमिश्रेषु मुख्यतः । प्रजातु सत्सु ते भूयः, प्रेरिताः प्राक्कुकर्मणा ॥ १७८ ॥ प्रोचुर्नीचैर्मतित्वेन, विजनेऽसज्जनत्वतः । पृथग्भूय वयं धन्य !, त्वत्तः स्थास्याम इत्यलम् ॥ १७९ ॥ " स्वस्ववेश्म समाश्रित्य, स्वस्वकृत्याकुलात्मभिः । बान्धवैरप्यवस्थेय–मिति न्याय्यं सतां मतम् ॥ १८० ॥ " ततो धन्योऽन्तर्शौर्जन्यो–ऽन्योन्यं बन्धुभिरभ्यधात् । नाहं स्वजिह्वया प्रह्वो, वदामीदं भवत्पुरः ॥१८१॥ यूयं वृद्धा गुणिस्पर्धा–श्रद्धावन्तो यदृच्छया । प्रकुर्वन्तु ततः सर्वं, कार्यं यद् रोचतेऽत्र वः ॥ १८२ ॥ पुनः किमपि संस्मृत्य, धन्यः कृत्यकृतां वरः । तुर्यमार्गं धनं दत्त्वा, मध्यं ग्राममयान्तरम् ॥ १८३ ॥ श्रुत्वेति धन्यसत्कोक्तं, सूक्तं नन्दितसौख्यदम् ॥ पृथग्भावकृतेऽत्यर्थं, तास्ते स्मातिगत्वरम् ॥ १८४ ॥ भागत्रयं समात् कृत्वा, साक्षात्कृत्वा निजोदितम् । भागे भागे तदायाताः, स्वर्णकोट्यश्चतुर्दश ॥ १८५ ॥ यदा तद्भ्रातृभिश्चक्रे, पृथग्भावविभावना । पदपश्चात् तदा कोट्यो–ऽभवंस्तेषामशेषतः ॥ १८६ ॥ घटितस्वर्ण–रूप्यादि–रत्नवस्तु समस्ततः । पट्टकूलादि तत्सङ्ख्यां, नाख्यात् सहस्रतावतां वरः ॥१८७॥ युग्मम् ॥ " द्विजास्ते पुरुषा धान्यां, निभृताः मत्सरितः । दीयमानमपि प्रायो, ये नेच्छन्ति महेच्छया ॥१८८॥ " "बहवस्ते नराभासा, न भासन्ते क्षितेस्तले । स्वकीयं

परकीयं वा, सर्वं लातुमतित्वराः ॥१८९॥" पश्यन्तु सन्तस्तेऽवश्यं, कर्मनिर्माणमुल्वणम्। तादृशो निःस्पृहो धन्यः, सुस्पृहास्तस्य बान्धवः
॥१९०॥ भ्रातरः स्वर्णमादाय, कदाशयवदाशया। यातुं स्ववेश्मविस्मेरा-स्त्वरन्ते सातिकश्मलाः ॥ १९१ ॥ तद्दत्तं वित्तमादाय,
मदान्धा इव दुर्धियः। द्वारसीम्नि ययुः स्वैर-चरिता दुरितेरिताः ॥ १९२ ॥ तावत् तदात्तवित्ताधि-ष्ठायकैर्यक्षनायकैः।
सायकैरिव ते रुद्धा, विद्धात्मानः पुनः पुनः ॥१९३॥ युग्मम्। भाग्यभङ्गीविनाभूता, हाहाहूता यतस्ततः। व्यावृत्य विगलद्वृत्ता,
धन्यं शरणमाश्रयन् ॥ १९४ ॥ प्र[ कर्षेण ततस्ते तु ], गर्वसर्वस्वदुर्विधाः। धन्यं प्रति गताशुष्यं, बान्धवास्ते बभाषिरे ॥१९५॥
शृणु धन्य! महापुण्य-पण्यनैपुण्यपण्यान!। पुरा सूक्ष्ममपि स्पष्टं, दृष्टं ते भाग्यमद्भुतम् ॥ १९६ ॥ एतावन्ति दिनान्येवं, मत्सरः
कुलितेन्दुभिः। त्वयाऽस्माऽस्माभिरिभ्येन, प्रारेभेऽनर्थमर्थिभिः ॥ १९७ ॥ " परे यदि खला न स्यु-र्दुष्पलाः शृङ्कलाः कलौ।
कथं ततः प्रसिद्धाः, सज्जनाः स्युर्जनार्चिताः ? ॥ १९८ ॥ " सतां प्रियकृतां मध्ये, त्वं सीमाऽसीममानदः। वसतामसतामन्तः,
शीलानो रत्नेव तु ॥ १९९ ॥ गुणागुणगुणैस्त्वं च, वयं च यदि सोदराः। हस्यामहे महेन्द्रेणो-द्यामहे चरणेन वा ॥ २०० ॥
ये सर्वोऽपि गर्वेण, मानवो भ्रश्यते वृथा। 'कर्मैव फलवज्जन्तूनां, स्त्रीणामपि शुभाशुभम्' ॥ २०१ ॥ 'युज्यते भुज्यते चापि,
निजोपार्जितमूर्जितम्। तैररपि जगज्जन्तु-र्वारैरिति कृतं गिरा ॥ २०२ ॥ तेऽभिनन्द्य तदा सद्य, इत्याद्यात्मानमात्मना। कर्मणां
फलं दृष्ट्वा, धन्यपादौ ववन्दिरे ॥२०३॥ धन्योऽपि पृथु सम्मान्य, पौनःपुन्ये(न्यो)न पुण्यवान्। सचकार सदाकारः, कृपाऽऽधारः
सहोदरान् ॥ २०४ ॥ धन्येनेति कुशलेन, भ्रातरः सान्त्वरादिताः। सम्प्रीणितास्तथा सर्व-प्रकारैः सुखिनो यथा ॥२०५॥ तेऽथ
गाम्भीर्यगुणयुक्, धन्ये पश्यति वारिवत्। माधुर्यधुर्यतामाधु-रौज्ज्वल्यं च ससङ्गवः ॥ २०६ ॥ सम्मुखेन सुखेनेति, तेऽथ धन्येन

श्रद्धा–दाने, न भवन्ति स्तोकपुण्यानाम् ॥ २ ॥ ” धन्यस्य सर्वस्वभ्रातृ–मैत्र्यैकाम्यमुपेयुषः । यत् पुनः शुभमुद्भूतं, तदशेषं प्रकाश्यते ॥ ३ ॥ अथान्यदाऽऽययावत्र, पुरे प्रवरसंवरः । चतुर्ज्ञानरदो दान्तः, क्षमा–नु(मु)क्ताविविक्तिमः ॥ ४ ॥ दानधर्मोदिता-श्रान्त–मधुव्रतकृतप्रियः । साधुपञ्चशतीयूथ–प्रथितः सद्गतिस्थितिः ॥ ५ ॥ विवेक–सेना–शृङ्गारः, सारसद्धर्म–सत्क्रमः । धर्म-घोषाभिधः सूरि–सिन्धुरो बन्धुरोदयः ॥ ६ ॥ निर्भिर्विशेषकम् ॥ तं तत्रायातमाकर्ण्य, कर्णामृतमिवाद्दतम् । धन्यः सभ्रातृको हर्षो–त्कर्षवर्षाम्बुदोऽभवत् ॥ ७ ॥ महोत्सवमिहातत्य, नितान्तोत्तमदानतः । स भ्रातृत्रितयोपेतो–ऽभवद् वन्दितुमुद्यतः ॥ ८ ॥ कुटुम्बाडम्बर–भ्रातृ–जाया–जायाष्टकान्वितः । वन्दितुं प्रययौ धन्यो, ‘ धर्मस्य त्वरिता गतिः ’ ॥ ९ ॥ भक्तियुक्ति गुरुं नत्वा, तत्त्वाभीप्सुतया तया । प्रतिपत्तिपुरस्काराद्, धन्यश्चाग्रेऽस्य तस्थिवान् ॥ १० ॥ अथाङ्गस्पृष्टभूपृष्ठ–मिष्टमानम्य सद्गुरुम् । धन्यः शुश्रूपुरास्ते स्म, ललाटघटिताञ्जलिः ॥ ११ ॥ “ उरसा शिरसा दृष्ट्या, वचसा मनसा धिया । पद्भ्यामथ कराभ्यां वा, प्रणामोऽष्टाङ्ग उच्यते ॥१२॥ ” तद्भ्रातरोऽपि चारोघ(प्य) श्रद्धां मनसि साञ्जसम् । गुरोरुपाविशन्नग्रे, देशनां श्रोतुमिच्छवः ॥ १३ ॥ धर्मघोषाभिधः सूरि–र्धर्मघोषान्वितोऽब्दवत् । भृशं ताण्डवयामास, सोल्लासं भव्य–केकिनः ॥ १४ ॥ भो भव्याः ! शृणुत भव्यां, देशनां क्लेशनाशिनीम् । चतुर्मुखजिनाधीश–शस्तामस्तभवभ्रमाम् ॥ १५ ॥ “ देयं दानं हृदः शुद्ध्या, सुपात्रे ऽमात्रभावतः ॥ शीलं शील्यमिह श्रीलं, कीलं मोहमहीशितुः ॥ १६ ॥ तपस्तप्यं तमः क्षप्यं, यथाशक्ति प्रशक्तितः । भाव्यो भवाभाव्यो, धर्मोऽस्त्येष चतुर्विधः ॥ १७ ॥ धर्मं चतुर्विधं शुद्धं, बालाबालाश्च ये नराः । दुःस्था वा यदि वा सुस्थाः,

५

सङ्गताः । कालं बहुमपि प्रीता, मुहूर्त्तमिव मेनिरे ॥ २०७ ॥ देवपूजा–नमस्कार–स्मृति–वन्दनकर्मभिः । पौषधावश्यकाभ्यां च, कालसाफल्यमादधुः ॥ २०८ ॥ क्रमाच्छ्रेष्ठ्यपि तच्छ्रुत्वा, पुत्रैकत्रनिवासिताम् । द्रुतं तमा(त्रा)गतस्तूर्णम्, 'अविरोधः सतां मतः' ॥ २०९ ॥ सकलत्राश्चतुष्पुत्राः, सकलत्राः समागमन् । प्राणमंश्च निजं तातं, समातरमतः परम् ॥ २१० ॥ वृद्धावस्थागृहागृद्धौ, तन्माता–पितरावुभौ । सुतानां सन्निधेर्धर्म–पाथेयाय पृयूयतौ ॥ २११ ॥ प्रान्ताराधनमाधाय, विधिवच्छुद्धमद्धिया । समाहिता–वनशना–दुत्तमां गतिमापतुः ॥ २१२ ॥ इति सकलकुटुम्बाडम्बरोद्भुप्रकाण्डः, सुविशदपदकीर्तिस्फूर्तिको सुद्युदारः । सुपमतमसु–खश्रीपूर्णभावासमन्द्रः, कुमुदमधिदधाति प्रीणनं धन्यचन्द्रः ॥ २१३ ॥ इति धन्यमहापुण्य–नररत्नशिरोमणेः । जिनधर्म–जयानन्दः, प्रस्तावस्तुर्यकोऽभवत् ॥ २१४ ॥

इति श्रीधन्यचरिते स्वकुटुम्बमिलन–भ्रातृजायापरीक्षण–भ्रातृग्रामपञ्चशतीदान–पुना राजगृहप्राप्ति–चतुरिभ्यसुतापरिणयन–पुनर्भ्रातृसमागम–विरोधनिरोधैकत्रस्थान–धर्मकरणवर्णनो नाम चतुर्थः प्रस्तावः ॥ ४ ॥

अथ पञ्चमः प्रस्तावः ।

" स्थाने वासः सुकुलममलं शीलपात्रं कलत्रम्, पुत्रो मित्रोचितगुणगणः सज्जनार्यानुरागः । न्यायस्थेयः सदयहृदयं वि(चि)–त्तसौहित्यमेत–न्निश्छद्मत्वप्रविदितमते कथ्यते सप्तसौख्यम् ॥ १ ॥ " " सुविवेकः संवेगः सद्गुरुसङ्गः कषायहीनत्वम् । पात्रे

श्रद्धा-दाने, न भवन्ति स्तोकपुण्यानाम् ॥ २ ॥ ” धन्यस्य सर्वस्वभ्रातृ-मैत्र्यैकत्र्यमुपेयुषः । यत् पुनः शुभमुद्भूतं, तदशेषं प्रकाश्यते ॥ ३ ॥ अथान्यदाऽऽययावत्र, पुरे प्रवरसंवरः । चतुर्ज्ञानरदो दान्तः, क्षमा-मु(मु)क्ताविविक्तिमः ॥ ४ ॥ दानधर्मोदिता-श्रान्त-मधुव्रतकृतप्रियः । साधुपञ्चशतीयूथ-प्रथितः सद्गतिस्थितिः ॥ ५ ॥ विवेक-सेना-शृङ्गारः, सारसद्धर्म-सत्क्रमः । धर्म-घोषाभिधः सूरि-सिन्धुरो बन्धुरोदयः ॥ ६ ॥ त्रिभिर्विशेषकम् ॥ तं तत्रायातमाकर्ण्य, कर्णामृतमिवाद्दतम् । धन्यः सभ्रातृको हर्षो-त्कर्षवर्षाम्बुदोऽभवत् ॥ ७ ॥ महोत्सवमिहातत्य, नितान्तोत्तमदानतः । स भ्रातृत्रितयोपेतो-ऽभवद् वन्दितुमुद्यतः ॥ ८ ॥ कुटुम्बाडम्बर-भ्रातृ-जाया-जायाष्टकान्वितः । वन्दितुं प्रययौ धन्यो, ‘ धर्मस्य त्वरिता गतिः ’ ॥ ९ ॥ भक्तियुक्ति गुरुं नत्वा, तत्त्वामीप्सुतया तया । प्रतिपत्तिपुरस्काराद्, धन्यश्चाग्रेऽस्य तस्थिवान् ॥ १० ॥ अष्टाङ्गस्पृष्टभूपृष्ठ-मिष्टमानम्य सद्गुरुम् । धन्यः शुश्रूषुरास्ते स्म, ललाटघटिताञ्जलिः ॥ ११ ॥ “ उरसा शिरसा दृष्ट्या, वचसा मनसा धिया । पद्भ्यामथ कराभ्यां वा, प्रणामोऽष्टाङ्ग उच्यते ॥१२॥ ” तद्भ्रातरोऽपि चारोध(प्य) श्रद्धां मनसि साञ्जसम् । गुरोरुपाविशन्नग्रे, देशनां श्रोतुमिच्छवः ॥ १३ ॥ धर्मघोषाभिधः सूरि-र्धर्मघोषान्वितोऽब्दवत् । भृशं ताण्डवयामास, सोल्लासं भव्य-केकिनः ॥ १४ ॥ भो भव्याः ! शृणुत श्रव्यां, देशनां क्लेशनाशिनीम् । चतुर्मुखाजिनाधीश-शस्तामस्तभवभ्रमाम् ॥ १५ ॥ “ देयं दानं हृदः शुद्ध्या, सुपात्रे ऽमानभावतः ॥ शीलं शील्यमिह श्लीलं, कीलं मोहमहीशितुः ॥ १६ ॥ तपस्तप्यं तमः क्षप्यं, यथाशक्ति प्रशक्तितः । भावो भाव्यो भवाभाव्यो, धर्मोऽस्त्येष चतुर्विधः ॥ १७ ॥ धर्मं चतुर्विधं शुद्धं, बालाबालाश्च ये नराः । दुःस्था वा यदि वा सुस्थाः,

कुर्युस्ते स्युः शिवास्पदम् ॥ १८ ॥ पुनर्मुनिवरः प्राह, महाबोधविधित्सया । पृच्छया श्राद्धधर्मस्थ–धन्यादीनामिदं मुदे ॥१९॥ दानपुण्यवनप्राज्य–सेचनाम्बुधरोद्धराम् । व्याख्याद् विख्यातिमुत्सङ्गां, मृगाङ्कस्य कथामथ ॥ २० ॥

तथाहि महिमाऽऽकीर्ण–दानश्रद्धानशोभिना । श्रूयतां श्रवणश्रेणी–श्रव्या तस्य कथा प्रथा ॥ २१ ॥ संसाराम्बुधियानं, दानं ददतेऽत्र ये सुपात्रेभ्यः । ते नर–सुर–शिव–सौख्यं, सुलभन्ते हंसपाल इव ॥ २२ ॥ वाराणसी वरा पुरी, मकरध्वजभूपभूः । तत्र चित्रदसम्पद्मान् , श्रेष्ठी सन्मकरध्वजः ॥ २३ ॥ तस्य स्वयंप्रभेत्याख्या, श्रेष्ठिनी श्रेष्ठचेष्टिता । तत्पुत्रोऽभन्मृगाङ्काह्वः, प्रह्वः पित्रोरविह्वलः ॥ २४ ॥ तं बाल्येऽध्यापनार्थायो–पाध्यायायार्पयत् पिता । ' तौ माता–पितरौ सत्यौ, यौ स्वं पाठयतः सुतम् ' ॥ २५ ॥ इतश्च नगरेऽत्रास्ति, श्रेष्ठिशिष्टो धनञ्जयः । तदङ्गजा प्रजासञ्ज्ञा, पद्मावत्यस्ति शस्तधीः ॥ २६ ॥ तत्रैव दिवसे साऽपि, प्रापिताऽध्ययनर्धये । ' पुत्रिकाऽपि तु पितृभ्यां, प्रायोऽध्याप्या श्रिये धिये ॥ २७ ॥ ' तयोश्च तुल्ययोर्बाल्य–गुण–रूप–वयः–श्रिया । साक्षात् सख्यमभून्मुख्यं, ज्योत्स्ना–ज्योत्स्नावतोरिव ॥ २८ ॥ खाद्यं स्वाद्यं तथा भोज्यं, पार्श्वे सद्वस्तु वस्तुतः । तौ तु सम्भूय भुञ्जाते, पुंजातेः प्रीतिकृत् त्वदः ॥ २९ ॥ कुत्रचिद् दिवसेऽन्यत्र, पद्मावत्यां गृहस्पृशि । धनञ्जयेन तत्पित्रा, पुत्रीक्रीडार्थमर्थवत् ॥ ३० ॥ कपर्दाशीतिप्रमितः, पणः प्रैषि सुताकृते । तद्वयस्यमृगाङ्केन, विश्रम्भाश्रितचेतसा ॥३१॥ भोज्यं पणकपर्दाना–मानीयानीय भावतः । भुक्तमेकाकिना तेन, बाल्यलौल्यवता सता ॥ ३२ ॥ त्रिभिर्विशेषकम् ॥ पद्मावत्या–मुपेतायां, मृगाङ्केनोदितं हि तत् । तया रुषितयाऽभापि, कृतं सुष्ठु त्वया न भोः ! ॥ ३३ ॥ यदि ते मेऽन्तिके सन्तोऽभविष्यंस्तत्कपर्दकाः ।' तान् विक्रीय ततोऽहं त्वकारिष्यं भूषणं क्षणात् ॥ ३४ ॥ एवमेव त्वया व्यर्थ–मप्रष्ट्युदरिणा कथम् ? )

' नात्मीयः प्रायशः कश्चित् , कदाऽप्यौदरिकस्य हि ' ॥ ३५ ॥ कुमारस्तद्वराकारो, निधाय हृदये स्थितः । 'न विस्मरति विस्मेरे, केषांचिद् दुर्वचः कदा ' ॥ ३६ ॥ अथाध्ययनपर्यन्ते, गुरुणा तावुभावपि । पित्रोः समर्पितावत्र, विद्यापात्रे इवोत्तरे ॥ ३७ ॥ श्लोक–काव्य–कथाग्रन्था–भ्यसनैर्व्यसनैर्विना । स्वसवर्ग्यजनाश्रित्यं, तावमूमुचतां मुदा ॥ ३८ ॥ क्रमेण यौवनारूढौ, प्रौढाविव धियर्धया । परस्परं परप्रेम–प्रोताविव बभूवतुः ॥ ३९ ॥ पित्रोरपि त्रपापेतं, तदावेद्य स्वसंविदा । कृतनानककर्माणौ, न्यूढौ निर्व्यूढसख्यकौ ॥ ४० ॥ ततस्तावतिसञ्जात–विख्यातस्नेह–मोहनौ । तिष्ठतः सुष्ठुतानिष्ठौ, पुष्टप्रेमतयौकसि ॥ ४१ ॥ अन्यस्मिन् दिवसे रात्रे–रन्तिमे प्रहरे विधेः । मृगाङ्कस्य तदाचक्तं, स्मृतं पद्मावतीवचः ॥ ४२ ॥ " येन केनापि यत् किञ्चित् , प्रोक्तं दुर्वचनं हृदः । न विस्मरति कस्यापि, भवितव्यमिदं यतः ॥ ४३ ॥ " इतश्च दिवसे तस्मिन्, सागरचन्द्रनामकम् । स्वमित्रं तु प्रतिष्ठासुं, द्वीपे सागरवर्त्मना ॥ ४४ ॥ पूरयन्तं प्रवहणं, वार्धियोग्यक्रयाणकैः । ज्ञात्वा तदा मृगाङ्कोऽपि, ततश्चिचलिपुस्त्वभूत् ॥ ४५ ॥ मुत्कलाप्य स्वपितरौ, वारयन्तावपि स्वयम् । गत्वा पद्मावतीं प्रोचे, प्रतिष्ठासुरिति प्रियाम् ॥ ४६ ॥ भद्रे ! रूपरमामुद्रे !, प्रेमसान्द्रे ! शृणूदितम् । समुद्रेऽहं तु यास्यामि, लाभवाणिज्यकर्मणे ॥ ४७ ॥ युग्मम् । त्वया कुलस्त्रिया सम्यग्–रीत्या स्थेयमनाकुलम् । ' कुलकाष्ठं स्त्रियस्ता हि, याः पतिव्रतसंवृताः ' ॥ ४८ ॥ ततः पद्मावती प्राह, विरहासहमानसा । नाहं त्वद्रहिता स्थाता, समायाता त्वया समम् ॥ ४९ ॥ दिनश्रीर्वा दिनाधीशं, रजनी रजनीश्वरम् । विद्युद्वन्तं विना विद्युत् , क्वापीष्टे स्थातुमातुरा ? ॥५०॥ तथाऽहमपि विज्ञेया, प्रिय ! त्वदनुयामि(यि)नी । सुखं दुःखं कुलस्त्रीणा–मस्तु पत्या समं सदा ॥ ५१ ॥ तेनोक्तं तर्हि भवता–चैवं चेद् रोचते हि ते । स तया सार्धं वार्ध्यन्तो, राक्षसद्वीपमाप च ॥ ५२ ॥ पद्मावत्याऽन्वितः सत्या,

महत्या तद्दिदृक्षया। कौतुकं पूरयामास, स्वद्वीपभूमिषु ॥ ५३ ॥ तं वासरमतिक्रम्य, रम्ये कदलिकानने। सप्रियोऽपि स सुष्वाप, रात्रावक्षतसौख्यतः ॥५४। एवं दिनानि भूयांसि, समुपास्य सुखं मुदा। प्रियाप्रियानतिक्रम्य–सुखाश्लिष्टावतिष्ठतम् ॥५५॥ पुनः प्रवहणेष्वेरं, पूर्यमाणेषु तज्जनैः। पिपासुरभवत् स्त्रोकी, मृगाङ्कोऽचिन्तयच्च तत् ॥५६॥ यदेतया पुरा गर्वाद्, दुर्वचोऽवाचि वाच्यवत्। तदेतस्या य(अ)वश्यायाः, कुर्वे दुर्वचवद् धियः॥५७॥ ध्यात्वेति चेतसैकन, रात्रावेव विधेर्वशात्। कपर्दाशीतिप्रमितं, पणं बध्वा तदञ्चले ॥५८॥ सुप्तामेव विमुच्याशु,निभृतं सम्भृताक्षपम् (पद्मावतीं त्यक्त्वा,स प्रियोऽपि प्रियामपि)। समुत्थायावहित्थात्मा, मृगाङ्कः प्रपलायत ॥५९॥ त्रिभिर्विशेषकम्। प्राप्य पोतसमीपे स, कपटं नाटयन् पटु। पूत्त्कारेति दुर्वारं, वारं वारं दुरन्तरम् ॥ ६० ॥ यन्‌ भो भोः! भक्षिताऽद्याशु, प्रेयसी रक्षसा स्वसा। दृष्ट्वा नष्ट्वा पलाय्याया–महं कथादनिष्टतः ॥६१॥ प्रेयेन्तां यानपात्रं तत्, त्वरितं भरितं यतः। समेष्यति न चेद् रक्षः, क्षामकुक्षि बुभुक्षया ॥ ६२ ॥ एवमुक्ते भिया मुक्ते, तेन तद्दयितेन हि। प्रेरितं तैः प्रवहणं, वायुवेगमनर्गलम् ॥ ६३ ॥ इतश्च सा जजागार, क्रमेणैव बोधिता। सम्भ्रान्तेव क्षपाप्रान्ते, प्रेयांसं न समैक्षत ॥ ६४ ॥ तदोत्थायाचिरापारं, तीरं कृत्वा सरित्पतेः। नापश्यत् पोतमुल्लास्य, पोतवच्चेतसः प्रियम् ॥ ६५ ॥ इतस्ततस्तदालोक्य, सर्वशून्यमिवाथ सा। शोकास्तोकतया तप्ता–ऽपतद् भुवि मुमूर्च्छ च ॥ ६६ ॥ प्रातः शीतेन वातेन, विनीतेनेव बन्धुना। लब्धं लम्भितचैतन्या, रोदःक्रोडं रुरोद सा ॥ ६७ ॥ द्वीपवच्छून्यवेश्मान्त–र्मालतीव वनान्तरे। व्यर्थं सा विललापोच्चै–र्न केनापि निवारिता ॥ ६८ ॥ स्वयं वस्त्राञ्चलेनास्र–मपनेतुमना मनाक्। कपर्दकपणं बद्धं, ददर्श विममर्श च ॥ ६९ ॥ तद् बाल्योक्तं स्मृतवती, चित्ते चिन्तितवत्यपि। 'अहो! वज्रादपि प्रायः, पुरुषाः परुषा कृता ॥ ७० ॥ अथ आप्तस्वरूपा सा, व्यावृत्य

द्वीपमापतत् । तपस्विनीव सा तस्थौ, गिरिकन्दरमन्दिरम् ॥ ७१ ॥ तत्र चित्तविनोदाया-पनोदायापदंहसम् । श्रीयुगादिजिनस्याधाद्, बिम्बं लेप्यमयं सुधीः ॥ ७२ ॥ परमेष्ठिनमस्कार-पुरस्कारमनारतम् । विधिज्ञा विधिवत् पुष्प-फलैः सा देवमार्चयत् ॥ ७३ ॥ ववन्दे च चिदानन्दान्, देवान् शक्रस्तवादिभिः । ' प्रायः स्त्रीणां सतीश्रीणां, भावपूजा मतोचिता ' ॥ ७४ ॥ पूर्वाधीतं च साऽध्येति, बुधवद् बन्धुरादरा । सामायिकव्रतावश्य-कादि सादितपातका ॥ ७५ ॥ कन्दमूलफलैः प्राण-वृत्तिं च प्रासुकैरधात् । सा कालं सफलं तेने, धन्यम्मन्या दिने दिने ॥ ७६ ॥ समानत्रमिमं द्वीप-मिति ज्ञापनहेतवे । ध्वजं वंशाग्रगं बध्वा, वृक्षाग्रे धृतवत्यपि ॥ ७७ ॥ अत्रान्तरे कियत्स्वेवं, दिवसेषु व्रजत्स्वथ । पत्रसांयात्रिकस्तत्र, द्वीपमापदपाम्पतेः ॥ ७८ ॥ ध्वजं दृष्ट्वा पदस्पष्टं, पोतादुत्तीर्य सत्वरम् । पदपद्धत्यनुपदी, प्रापद् गिरिगुहान्तरम् ॥ ७९ ॥ तत्राधिष्ठातृदेवीव, देवार्चाकर्मकर्मठा । ददृशे सुदृशां दृश्या, विस्मितेन हि तेन सा ॥ ८० ॥ तां स्वसारमिति प्रोच्य, व्याजहार गिराऽऽदरात् । साऽपि तद्वचसा भृत-विश्रम्भा तमभाषत ॥ ८१ ॥ हे भ्रातर्यदि सत्योऽसि, भ्राता तन्मामतः पराम् । वसतिं नय पोतेन, चिरं जीव वराशिषा ॥ ८२ ॥ तेन पोते समानायि, प्रेरि पोतस्ततः परम् । स तां रूपोध्धुरां दृष्ट्वा, चलचित्तोऽब्रवीदिति ॥ ८३ ॥ यदि भगि ! मदीयेन, जीवितेन प्रसीदसि । तर्हि मां भज भोगार्थं, त्वं स्मरज्वरजर्जरम् ॥ ८४ ॥ यतः-" तावन्महत्त्वं पाण्डित्यं, कुलीनत्वं विवेकिता । यावज्ज्वलति नाङ्गेषु, हन्त ! पञ्चेषु-पावकः ॥ ८५ ॥ " " मध्यत्रिवलीत्रिपथे, पीवरकुच-चत्वरे च चपलदृशाम् । छलयति मदन-पिशाचः, पुरुषं हि मनागपि स्खलितम् ॥ ८६ ॥ " " तावदेव कृतिनामपि स्फुर-त्येष निर्मलविवेक-दीपकः । यावदेव न कुरङ्गचक्षुषां, वीज्यते चटुललोचनाञ्चलैः ॥ ८७ ॥ " इत्यादि । ततः सा वर्णिनी कर्णौ, पिधाय विधुरा पुरा । शान्तं पापमिति प्रोच्य,

प्राह साहसर्स(सि)हिका ॥ ८८ ॥ आः ! पापव्यापसंलापाद्, भगिनीं प्रतिपद्य माम् । मद्य-मांसादिव वक्षि, विलक्षमसमञ्जसम् ? ॥ ८९ ॥ " सन्त्वस्त एव सन्त्वस्तु, शीललीलाकुलाः कुलात् । ये प्रतिपन्ननिर्वाह-साहसाङ्कसहाः सहाः ॥ ९० ॥ " " ये खलाः सुखला लोलाः, कोलायितकुलाकुलाः । ते पुनः स्ववचश्च्युत्या-हत्यात्याहत्यसंहताः ॥ ९१ ॥ एवं सत्यां तदा पद्मा-वत्यामत्यन्तनीतितः । ब्रुवाणायां गुणाग्रण्यं, यज्जातं तद् वितन्यते ॥ ९२ ॥ अत्रान्तरे वरेण्याभिः, पोतदेवीभिरोच्यत । रे दुरात्मन् ! शिरःशूलं, पोतारूढः करोपि किम् ? ॥ ९३ ॥ कुकर्म धर्मनिर्मुक्तं, शर्मभित् कुरुषे रुषे ? । ततो भवतु ते पोत-स्फोटः संस्फोटकः श्रियाम् ॥ ९४ ॥ ततः सम्पात-दुर्वात-महोत्पात-निपाततः । भग्ने पोते तु सा लेभे, फलकं पुलकाञ्चिता ॥ ९५ ॥ तद् भुजाभ्यामथादाय, समुदायं मुदामिव । तरीतुमब्धिमारब्ध, लब्धोद्यमवती सती ॥ ९६ ॥ तत्राप्यत्रान्तरे दैवा-ज्जवाज्जलकरेणुना । करेणोल्लालिता सोच्चैः, कन्दुकोल्लाललीलया ॥ ९७ ॥ अपतन्त्येव साऽऽकाशाद्, दध्रे विद्याभृता यता । ' प्रायः प्राणभृतां स्यातो, दैवाद् द्वे सम्पदापदे ' ॥ ९८ ॥ विद्याधरोऽपि तां रूप-निरूपीकृतदेवताम् । निरूप्य प्रार्थयाञ्चक्रे, कामार्थं चाटुपाटवम् ॥ ९९ ॥ रूपमर्षश्रिया मिथं, प्रातरूपे न्यरूप्यत । क्वापि स्यादश्रियामत्र-मेतच्छीता निदर्शनम् ॥ १०० ॥ सा तं विद्याधरं भ्राता, त्वं मेऽसीति वशीन्द्रिया । प्रत्यबोधि धियः शुद्ध्या, सुबोधो बोधवान् बुधः ॥ १०१ ॥ तदा विद्याधरेणापि, परितुष्टेन शिष्टवत् । अदृश्यकारिका वैरि-वियोच्छेदकरी यथा ॥ १०२ ॥ विद्या रूपपरावृत्ते-रेतत् तस्यायदीयत । वितेने तेन सा चेति, विद्याशक्तित्रयीमयी ॥ १०३ ॥ इत्थं सत्कृत्य तां भक्त्या, भ्रातृवद् भगिनीमिव । सं(सुं)सुमारपुरोद्याने, स सद्यस्तामभूमुचत् ॥ १०४ ॥ " सज्जनः सुजनः पुण्यः, पण्डितः शीलमण्डितः । यत्र यत्र व्रजत्येवं, तत्र तत्र स पूज्यते ॥ १०५ ॥ " साऽपि

पद्मावती रूप-परावर्तनविधया । पुंरूपं प्राप्य पूर्मध्ये, जगामोद्दामधामधीः ॥ १०६ ॥ स प्राह साहसाङ्कोऽह-मिति पृच्छति पूर्जने । 'प्रायः साहसिकाः स्वार्थ-सिद्धये स्युरलक्षिताः ' ॥ १०७ ॥ तत्रैकस्यास्तु वृद्धायाः, प्रगेऽयं गेहमागतः । माता मे त्व-मिति प्रोच्य, तस्थावास्थाऽतिसुस्थितः ॥१०८॥ सबलं सकलाभिः स, कलाभिः कलितः कलः । कलावानिव तत्कालं, कलयामास सत्कुलम् ॥ १०९ ॥ ज्ञान-विज्ञाननिध्यानात्, पौरगौरवगौरगीः । धर्मिष्ठानप्यधर्मिष्ठां-स्तोषयामास भासनः ॥ ११० ॥ यतः—" लवणाच्च रसोऽस्त्यन्यो, न विज्ञानात् परः सुहृत् । धर्मादन्यो निधिर्नेर्द्धैः, क्रोधादन्यो न वैरवान् ॥ १११ ॥ " एकर्हि कौतुकाद्वैतात्, क्रीत्वाऽर्धपणदानतः । बर्हिबर्हान् ग्रहर्षोत्थानाय्य प्राज्याङ्कवर्णकान् ॥ ११२ ॥ पट्टसूत्रेण संसूत्र्य, व्यञ्ज(ज)नं जनरञ्जनम् । नरवर्मनृपमङ्के, नामाङ्कमचीकरत् ॥ ११३ ॥ तज्जरत्याः करे प्रार्प्य, पुरान्तः प्राहिणोत् स हि । षोडशोत्तरसत्पञ्च-शतीं द्रम्मान् ददाति यः ॥ ११४ ॥ तस्मै देयमदस्ताल-वृन्तमित्यनुशिष्य च । 'विज्ञानेन विना न स्यात्, प्रसिद्धिस्तद्वता सताम् ' ॥११५॥ युग्मम् । तद् रम्यमपि तद्द्रम्म-बाहुल्य(बहु)मूल्यतया तथा । न लोकः कोऽपि गृह्णाति,'द्रम्माः खलु सुदुस्त्यजाः' ॥ ११६ ॥ येन केनापि लोकेन, द्रव्याणुस्पृहयालुना । ग्रहीतु शक्यतेऽशक्यं, तादृशं वस्तु वस्तुतः ? ॥ ११७ ॥ राजा व्यजन-वार्तां तां, श्रुत्वा स्वान्तिकमानयत् । नेत्रमित्रं तु तद् दृष्ट्वा, स्वकनामाङ्कमेकतः ॥ ११८ ॥ तदुक्ताद् द्विगुणं मूल्यं, दत्त्वा सत्त्वा-धिकत्वतः । पप्रच्छातुच्छयद्दच्छं, कोऽस्य कर्तेति तां प्रति ॥ ११९ ॥ मत्पुत्रः साऽऽह राजेन्द्र !, साहसाङ्कसमाह्वयः । तमङ्काय समाहूय, भूपः पप्रच्छ वत्सलः ॥ १२० ॥ भो वत्स ! वेत्सि विज्ञान-मन्यच्चापि मनःप्रियम् ? । तेनोक्तं युक्तिमत् सर्वं, वेद्मि निच्छद्मसद्म सद ॥ १२१ ॥ राज्ञाऽथाचल-विजया-दिकाः पुत्राः स्वकास्ततः । तस्मै दत्तास्तदा तेन, कलासु कुशलाः कृताः

॥ १२२ ॥ राज्ञे समर्पितास्तेन,ते सर्वेऽप्यस्तसत्कलाः । ' कुशाग्रीयधियां यस्माद्, बुद्धेरसुकरं किमु ? ' ॥ १२३ ॥ राज्ञा तुष्टेन स प्रोचे, किं तुभ्यं दीयते वद ? । सर्वदानाधिकं येन, विद्यादानं त्वया ददे ॥ १२४ ॥ साहसाङ्को नृपं प्राह, तदा स्वाभिमतं हृदि । शुल्कमण्डपिका-मुद्रा, मह्यमर्प्या महीपते ! ॥ १२५ ॥ राज्ञा तथैव तच्चक्रे, वक्रेतरहृदा मुदा । लोकानां तेन दानार्द्धं, त्यक्तं युक्तिमता सता ॥ १२६ ॥ ऊचे चेति परं दान-चौरी कार्या न सर्वथा । यः करिष्यति सर्वस्वं, हर्ताऽहं तस्य निश्चितम् ॥ १२७ ॥ पुम(न)र्यथेप्सितं दण्डं, करिष्ये तस्य तत्क्षणम् । इति रीतिकृते बन्धे, निर्बन्धेन स निर्वहेत् ॥ १२८ ॥ अत्रान्तरे परं चौरो-पद्रुतैस्तत्पुरीजनैः । राज्ञो विज्ञपयाञ्चेत्य, सर्वं चौरविचेष्टितम् ॥ १२९ ॥ राज्ञाऽऽहूतस्तलारक्षो, रक्षितुं लोकमक्षतम् । प्रोचे च रे तलारक्ष !, चौरं द्रक्ष्यति नो कथम् ? ॥ १३० ॥ स प्राह हे महाराज !, पश्यन्नपि दिवानिशम् । न चौरं क्वापि पश्यामि, गूढवद् मल्ल तत्परम् ॥ १३१ ॥ स्वयमेव ततो राजा, चौरनिग्रहहेतवे । प्रच्छन्नं निर्गतोऽभ्राम्यत्, पुरे वायुरिवान्तरः ॥ १३२ ॥ राज्ञाऽप्यत्रापि नान्यायी, भ्रमक्रमवशादसौ । अदृष्ट्वा चौरमागार-मागादात्मवदेश(प?)यम् ॥ १३३ ॥ इतश्च मन्त्री सन्मन्त्रः, समागत्य प्रणम्य च । व्यजिज्ञपन्नृपं देव !, मा विषीदेति तं वदन् । १३४ ॥ दिनपञ्चकमध्ये तं, ग्रहीष्यामीह चौरटम् । विडम्बनार्हं मद्बुद्धे-र्नास्त्यसाध्यं प्रसिद्धितः ॥ १३५ ॥ स चौरस्तु महाशूरः, प्रतिज्ञां मन्त्रिणोऽशृणोत् । रात्रौ मन्त्रिगृहे गत्वा, दत्त्वाऽवस्वापिनीं पुनः ॥ १३६ ॥ निक्षेपामर्पेवांस्तस्य, सर्वस्वं मन्त्रिणोऽग्रहीत् । ' दस्यवो दुर्धराः स्युर्हि-नृणां विद्याबलोल्बणाः ॥ १३७ ॥ युग्मम् । एवमन्ये बुधम्मन्या-स्तापसाधारतदुधु(घ)ताः । सर्वे विडम्बितास्तेन, मन्मथेनेव सर्वथा ॥ १३८ ॥ अत्रान्तरे तु मकर-दंष्ट्राऽऽह्वा शु(श)म्भली सभाम् । समेत्य भूपतिं नत्वा-ऽवादीदिति समज्वरम् ॥१३९॥ देवाहं मद्गुरमाहा, ग्रहीष्ये चौरमारवत् ।

'स्त्रीचरित्रं यतश्चित्रं, सपत्नाङ्कुरवे जगत् ' ॥१४०॥ चौरोऽपि शु(श)म्भलीसन्धां, श्रुत्वा सत्त्वाधिको धिया । भाररूपः सशृङ्गारो, रात्रौ तद्गेहमार सः ॥१४१॥ तद्गृहद्वारि सञ्चारि-कुब्जां दृष्ट्वा स चेटिकाम् । प्रहृत्य मुष्ट्या सरली-चक्रे रूपामरीमिव ॥१४२॥ तया विस्मितया त्वेत्य, विज्ञप्ता शु(श)म्भली शुभे ! । स्वामिनि ! द्वारि चेद्दक्षो, दक्षः कोऽप्यस्ति शस्तना ॥१४३॥ येनाहं सरली-चक्रे, हत्वा सुष्ठु स्वमुष्टिना । चमचक्रे ततो वेश्या,वश्यालस्या कुकर्मसु ॥१४४॥ शु(श)म्भल्या स तदाऽऽहूतः, पुरुहूत इवादरात् । जगाद तामहं सर्व-कलासु कुशलोऽस्म्यलम् ॥ १४५ ॥ ततः साऽऽह नता स्वच्छ !, वत्स ! मां तरुणीं कुरु । पुनर्येन जनं सर्वं, वशयामि दिवानिशम् ॥ १४६ ॥ ततः स औषधं दत्त्वा-ऽऽदीदेशमतः परम् । त्वयाऽपवरकस्यान्तः, प्रविश्य स्थेयमास्थया ॥१४७॥ सम्यग् नियम्य तद्द्वारं, भक्ष्यमौषधमिक्षुवत् । प्रभाततश्च तरुणी, भविष्यसि सुरी वरा ॥ १४८ ॥ तद्गृहात् सर्वमादाय, गतोऽ-क्षाय क्वचिच्च सः । कु(य)तो मुहूर्त्ततो धूर्त-धूर्तयेते ह्यखिलं किल ! ' ॥ १४९ ॥ ततश्च प्रातरायाता, शुभाशा शु(श)म्भलीसुता । खरं खरीस्वरं श्रुत्वा, हत्वा चात्मानमात्मना ॥ १५० ॥ रुदद् विपाट्य तद्द्वार-मकामैक्षिट रासभीम् । काकूयमानामधिकं, कर्ण-स्फोटस्फुटं कटु ॥ १५१॥ युग्मम् ॥ विखिन्नमानसा दीना, तस्यावस्थानदुःस्थिता । धूर्तघृ(धृ)ष्टस्तु कस्याग्रे, समाचष्टेऽन्यमुद्दत ? ॥ १५२ ॥ यतः-" ठद्वारः स्थविरो घृ(धृ)ष्ट-श्छत्कु(ठक्कु)रः स्थानभ्रू(भ्र)ष्टकः । रणनष्टोऽक्षया घृ(धृ)ष्टो, मुष्टोऽष्टौ स्युरघोदशः ॥ १५३ ॥ " तदा परिच्छदैश्छन्न-मसा यद् रोरुदीत्यदः । ' चौरमाता मुखं कोष्ठ्यां, न्यस्य रोदित्यवश्यतः ' ॥१५४॥ पुन-र्दिने तु कस्मिंश्चि-न्नृपपुत्रीमपि द्रुतम् । अहे चिरण्यरेखाऽऽख्यां, सुबुद्धि दुष्टकर्मवत् ॥१५५॥ ततश्चानन्तरं राजा-ऽदीदपत् पटहं पुरे । एतदुद्घोष्य सद्घोषं, सर्वलोकमभि स्फुटम् ॥ १५६ ॥ यो मत्पुत्रीमिमामिष्टा-मानयेच्छलवद्बलात् । तस्मायस्मि ददाम्येतां

यथेप्सितधनं ततः ॥ १५७ ॥ भ्राम्यतीति पुरेपारं, पटहे पटहेतये । न कोऽपि रोपितप्रीति, पटहं तमपस्पृशत् ॥ १५८ ॥
साहसी साहसाङ्कोऽस्यो, श्रीपथे सञ्चरन्नथ । प्रास्प्राक्षीत् पटहं दाख्या(क्ष्या)द्, वीक्षाऽऽपन्नजनेक्षितम् ॥१५९॥ यतः–"अर्थपाठश्च
कुष्ठश्च, दृश्यो दुष्टोऽपि निष्ठवत् । रहन्ति छन्नं न क्वापि स्वब्दाच्छन्नोदितार्कवत् ॥ १६० ॥" सतां प्रीतिर्मत(मेति)श्चाप्य–भोगेऽपि
शुभगा शुभा । ' निधानस्याऽपि किं न श्रीः, सुस्थिरं कुरुते मनः ? ' ॥ १६१ ॥ ततो राजसमीपे स, गत्वा नत्वाऽवदन्नृपम् ।
विषण्णो भव मा भूप!, स्वरूपं भज भूपते ! ॥ १६२ ॥ तव पुत्रीमहं मित्री–भूतस्त्वत्पुण्यभूतितः । समानयामि श्रीराम–सखि-
वज्जनकात्मजाम् ॥ १६३ ॥ इत्युक्त्वा स गृहं गत्वा–ऽनुचरानाह साहसात् । भाण्डागारगुरुद्वार–मुद्घाटं रक्ष्यमद्य तत् ॥१६४॥
निभृतं स्थेयमत्रेय–श्चौरमाशङ्क्य सङ्कुलम् । न पूत्कार्यमितस्स्थैर्यं, शिक्षयामास चेति तान् ॥ १६५ ॥ युग्मम् । स्वयं सस्मार तां
विद्या–मदृशीकरणक्षमाम् । परविद्याच्छिदि विद्यां, दध्यावध्यात्मिवत् स च ॥ १६६ ॥ स चौरस्तत्प्रतिज्ञां तां, श्रुत्वा गत्वा च तं
प्रति । तालोद्घाटकरीं विद्या–मपस्वापनिकां स्मरन् ॥ १६७ ॥ तस्य वेश्म विवेशाशु, वस्तु जग्राह चाहितः । निर्जगाम धियो-
द्दामा, धाम स्वं यातुमुद्यतः ॥ १६८ ॥ कुमारस्तु धियोद्दारो, लग्नस्तत्पृष्ठ एव सः । खड्गभाग् निर्ययौ पुर्या–स्तत्पातालगृहं गतः
॥ १६९ ॥ चौरो धनं धनस्थानं, नीत्वा मुक्त्वा च यत्नतः । राजपुत्रीसमीपेऽगात्, तां च प्रोवाच चञ्चलः ॥ १७० ॥ सु-
न्दरि ! त्वरितीभूय, भूयो मत्कथितं कुरु । प्रमदा(अबला)सु बलात्कारः, क्वापि न क्रियते यतः ' ॥१७१॥ कृत्वेति हेतुना नाहं,
बलात्कारं करोम्यरम् । कामशास्त्रे यतः प्रोक्तं, ' स्त्रीषु मार्दवमाचरेत् ' ॥ १७२ ॥ भृतमन्युस्ततः कन्या, प्राह साहसवन्मनाः ।

नाहं करोमि रे पाप !, त्वद्वचः पापपाकिमम् ॥ १७३॥ परमद्याधुना सद्यः, पापं ते पाकमागतम् । पतिष्यति शिरस्येव, रे वराक!
स कालतः ॥ १७४ ॥ ब्रुवाणामिति तां कन्या-मन्यायी स स्वमन्युतः । करे धृत्वा तु तामाह, स्मरेष्टं सुष्ठु निष्ठुरे ! ॥१७५॥
अत्रान्तरे वरेण्योराः, कुमारः सारविक्रमः । प्रकटीभूय प्रोवाच, तं चौरमचिरादिति ॥ १७६ ॥ रे ! दुरात्मभरं क्रूर !, कन्यां
हंसि नृशंस हे ! । कथं सिध्यति ते खड्ग-स्त्रुट्यत्कण्ठस्य कुत्सितः ? ॥१७७ ॥ तन्मुक्तः कुमरे खड्गः, क्वापि चास्फल्य बल्यपि।
काष्ठखड्ग इव लघो, भग्नो भुग्नोऽम्बुभभवत् ॥१७८॥ ततो मुद्गरमुद्यम्य, तं धावन्तं क्रुधोद्धुरम् । कुमारः पादघातेन, पातयामास
लासतः ॥१७९॥ निहत्य मुष्टिभिः सुष्ठु, तं कात्स्न्र्यात् पदपार्ष्णिभिः। मयूरबन्धात् सोऽबध्नात्, त्रुट्यत्सन्धि रटत्स्वनम् ॥१८०॥
युग्मम् । कुमारीं च तथाऽऽश्वास्य, विश्वास्य च वरादरम् । पिधाय च गृहद्वारं, निरगादात्तकन्यकः ॥ १८१ ॥ प्रातः सदसि
गत्वा च, स नत्वा प्राह भूमिभुम् । राजन् ! पुर्यां गृहाणेमां, क्षेमवांश्च मयाश्रितः ॥ १८२ ॥ पुण्यश्लोकाश्च ते लोका, विलोक्या-
लोकयलोकनैः । स्वं स्वं वस्तु च गृह्णन्त्व-निह्नवाच्च व्यजिज्ञपत् ॥१८३॥ युग्मम् । राजा चमत्कृतश्रान्तः, श्वा(स्वा)न्ते भ्रान्तोऽभवच्च
यः । तत् तथा कारयामास, समासेन समादिशन् ॥ १८४ ॥ चौरमानाय्य चामा(न्या)य्य-निवृत्त्यै न्यायवान् नृपः । सकृपः कल्प-
यामास, सुरूपां कुट्टिनीं च ताम् ॥ १८५ ॥ तस्मात् पुनरपस्वाप-तालोद्घाटकरीं द्वयीम्। विद्यामादाय विपयात्, स तं च निरवा-
सयत् ॥ १८६ ॥ एवं विद्यावते तस्मै, साहसाङ्काय रंहसा । राज्ञा हिरण्यरेखा सा-ऽदायि पूर्वमुदीरिता ॥ १८७ ॥ अत्रान्तरे
परद्वीपात्, सिंहलाद् दैवयोगतः । वस्तून्युपार्ज्य तत्रागा-न्मृगाङ्कः पोतसार्थपः ॥ १८८ ॥ गृहीत्वोपायनं सोऽपि, साहसाङ्कमु-
पाययौ । दृष्टश्च साहसाङ्केनो-पालक्षि च तदीक्षणात् ॥ १८९ ॥ त्यक्त्वा शुल्कार्थमूचे स, कार्यं चौर्यं न शुल्कगम् । विलोकितुं च

तत्पोत-मापपात स्वयं रयात् ॥ १९० ॥ विदन् नन्दगतिं नन्त्वा, दानचौर्यादि विग्रया। गत्वा पोतान् व्यलोकिष्ट, शिष्टदौपिकवत् स्वयम् ॥ १९१ ॥ तदुक्तादधिकं वस्तु, विलोक्य क्रोधदुर्धरः। स तमाह महादुष्टं, प्रागपि ज्ञातवृत्ततः ॥ १९२ ॥ रे! त्वया सातिरेकेऽपि, दानार्धेऽपि कृते सति। किं दानचौरिकाऽकारि, न्यत्कृतव्यवहारिता? ॥१९३॥ स ततोऽङ्घ्रिप्रहारेण, हारेणेव क्षुधः क्षियः। निजघ्ने गतविघ्नेन, साहसाङ्केन मस्तके ॥१९४॥ तत्सर्वस्वं गृहीत्वा तं, संगृह्य च महाग्रहम्। निन्ये स्ववेश्म निगडै-र्निगड्य निहितो रहः ॥ १९५ ॥ प्रत्यहं क्रियते तस्य, कम्बाभिस्ताडनं पुनः। प्सानं पर्युषितं चोष्णं, वारिपानमवारितम् ॥ १९६ ॥ दुःखमेवं विपहते, मृगाङ्को मृगवद् विधेः। कदाचिन्नृपनिर्बन्धा-न्निर्बन्धो बन्धुरः कृतः ॥१९७॥ स सेवां साहसाङ्कस्य, कुर्वन्नितिप्रति शिष्यवत्। साशङ्कं साहसाङ्कं स, पश्यन् वक्तुमपारयन् ॥१९८॥ चिन्ताविधुरितस्वान्त-श्चिन्तयत्येवमेव सः। पद्मावती किमेषा न, परावर्तितरूपभृत्? ॥ १९९ ॥ पुनः स्वचित्तं तद्भ्रान्तिं, निवारयति सान्तरम्। 'यच्चित्तं नयने चैते, जातिस्मृतिवती स्मृते' ॥ २०० ॥ गतेऽत्र चिरकालेऽथ, विचा(का)ले प्रासन्नत्यपि। साहसाङ्कं स चाह स्म, विस्मयापन्नमानसः ॥ २०१ ॥ स्वामिन्! प्रसद्य मां मुञ्च, बन्धूनां मिलनाय यत्। गच्छाम्यहं महासत्त्व!, सत्वरं हि त्वदाज्ञया ॥ २०२ ॥ प्राहाथ साहसाङ्कस्तं, न त्वां मुञ्चामि वञ्चकम्। सापराधमिव व्याधं, गुणमार्गोपसर्गदम् ॥२०३॥ स पुनः प्राह पुण्याह!, स्वामिन्! केनापि हेतुना। प्रकारेण च मां मुञ्च-स्यसिस्पर्शमिवादिश ॥ २०४ ॥ तेनोक्तं युक्तितो मत्क-पादयोः पलमात्रकम्। यद्याज्यं शोषस्येषत्तु(?), मुञ्चामि त्वां तदाऽऽपदः' ॥ २०५ ॥ तेन प्रोक्तं तथैवेति, पारवश्यवता सता। 'यतो नरकसङ्काशं, परायत्तत्वमुत्तरम्' ॥ २०६ ॥ ततः पलप्रमाणाज्यं, कृत्वा कचोलकेऽचलत्। साहसाङ्कः समं तेना-स्थाप्सीच्च सदनोपरि ॥ २०७ ॥ मृगाङ्कः सोऽपि

सुप्तस्य, साहसाङ्कस्य वश्यगः । स्नेहेन भ्रक्षयत्यंह्री, श्रीमान् संवाहनावहः ॥ २०८ ॥ साहसाङ्कस्य पादान्ते, दान्तेऽच्छं तस्य पश्यतः । न क्षीयते घृतं न्यक्षं, दुःखितस्य यथा दिनम् ॥ २०९ ॥ कुमारः साहसाङ्कस्तु, सुप्तः कपटनिद्रया । विलोकयति कर्ताऽयं, किमतः परमित्यतः ॥ २१० ॥ स कच्चोलकमुत्पाट्य, मृगाङ्को रङ्कचेष्टया । पयःपिपासुवत् त्वाज्यं, पपौ प्रौढोऽपि मूढवत् ॥ २११ ॥ कुमारेण ततः प्रोचे, सोऽचेतन इवोचितम् । रे पाप ! किं पपे पाद–संवाहनघृतं शृतम् ॥ २१२ ॥ इत्युक्त्वा जत्तया हत्वा, स बभाषे विभापया । तव किं क्रियते ब्रूहि, किङ्करस्येव दैवतः ? ॥ २१३ ॥ दोषाङ्केन मृगाङ्केन, दिने विच्छायतां यता । विज्ञत्वमिति सङ्क्षिप्तं, साहसाङ्कस्य भास्वतः ॥ २१४ ॥ त्वत्करा भास्वराः स्वैरं, तमस्काण्डनिराकृतः । मत्पृष्टिश्च तमःस्पृष्टी, रोचते तव क्रूरतरम् ॥ ॥ २१५ ॥ ततस्तेन प्रशस्तेन, कृपापरवशात्मना । कृत्वा स्वं रमणीरूपं, विश्वरूपप्रियोपमम् ॥ २१६ ॥ भुजे सौख्यभुजे धृत्वा, पर्यङ्के स न्यवेशयत । भाञ्जला प्राञ्जलिः पश्चाद्, व्यजिज्ञपदिदं हि सा ॥ २१७ ॥ युग्मम् । स्वामिन् ! त्वदभिमानेन, विमानेन, विपद्भुवां(द् ध्रुवम्) । विरूपं तेऽकृताकृत्यं, तत् क्षन्तव्यं क्षमानिधे ! ॥ २१८ ॥ मुदितेनाथ तेनोक्तं, युक्तियुग् वचनं शुचि । हे भद्रे ! शीलसद्भद्रे !, धन्योऽहं पुण्यवानहम् ॥ २१९ ॥ यस्य धर्मवयस्येयं, वर्या भार्या भवादृशी । दृश्यते शीललीलाली, जाता ख्याता प्रभावभूः ॥ २२० ॥ युग्मम् ॥ राजाऽपि ज्ञापितोदात्त–तत्कव्यतिकरोत्कहृत् । श्रुत्वा समागतस्तत्र, चिनवान् प्रोचिवानिति ॥ २२१ ॥ अहो ! सत्त्वमहो ! सत्य–महो ! तत्त्वमहो ! मतिः । विद्यते विधयाऽद्यापि, पुं–स्त्रीरत्नधरा धरा ॥ २२२ ॥ नृपेणाथ पृथुन्याय–चताऽनेत्य यथातथम् । मृगाङ्केन तदा तेन, न्यवाह्यत कुमार्यपि ॥ २२३ ॥ स्था-

पयित्वा कियत्कालं, बहुमानसगौरवम् । ससुखं प्रेषयामास, राजा तं तत्पुरं प्रति ॥२२४॥ तत्र पित्रोर्मुदा पादावभिवन्द्याभिनन्दितः । सकलत्रः श्रिया सत्रा, सुखात् तिष्ठति शिष्टतः ॥ २२५ ॥ अन्यदा बहिरुद्याने, मुनीन्दुर्मतिसागरः । समायासीदयोल्लासी, विलासी श्रुतसम्पदाम् ॥ २२६ ॥ तं श्रुत्वा श्रुतिपीयूष–पुषं श्रद्धाधिया सुखम् । नृपाद्या वन्दितुं जग्मु–र्मृगाङ्कोऽपि प्रियाऽनुगः ॥ २२७ ॥ गुरुं नत्वा पुरः स्थित्वा, पीत्वा धर्मरसायनम् । लब्ध्वाऽवसरसंरम्भं, मृगाङ्कः पृष्टवानिति ॥ २२८ ॥ भदन्त ! ब्रूहि सन्देहा–पोहदं मोहरोहहृत् । मया पूर्वभवेऽकारि, दुष्कृतं सुकृतं किमु ? ॥ २२९ ॥ येन लक्ष्मीरलक्ष्मीश्च, जाता सापायता यता । तत् सर्वमुर्वेपि प्राच्यं, कर्मविद्य मे दयिन् ! ॥ २३० ॥ तद्विज्ञप्तिमिमां श्रुत्वा, तत्त्वाधिकशिरोमणिः । मुनिः प्राह महोत्साह !, शृणु पूर्वभवं तव ॥ २३१ ॥ त्वया पूर्वभवे दानं, दत्त्वा भावस्तु खण्डितः । खण्डितं तेन ते सौख्यं, जज्ञेऽगण्यविडम्बनम् ॥ २३२ ॥ दानाद्याः सफला धर्माः, शर्मणेक्ताः (ते) परस्परम् । सम्पद्यन्ते प्रपद्यस्व, पञ्चाङ्गुलिनिभालनात् ॥२३३॥ "दानाद्याः संगताः सन्तः, सन्तु स्वार्थसमर्थकाः । पृथक् पृथग् न ते प्रायः, पञ्चाङ्गुलिनिदर्शनम्" ॥ २३४ ॥

तद्यथा—"सचेतनाचेतनेषु, समुदायो जयप्रदः । अचेतनेषु हस्तस्य, पञ्चाङ्गुल्या निदर्शनम् ॥ २३५ ॥" एकदा तर्जनी दध्यौ, यदहं गुणभाजनम् । तदन्या निकटस्थाने, किं कुर्वीरन् गुणोज्झिताः ? ॥ २३६ ॥ विश्वे सङ्केतितं वस्तु, यदास्ते दर्शयामि तत् । गुणिनो वर्णयामीति, तर्जयामि सदूषणान् ॥ २३७ ॥ गुणत्रये विचारेण, गर्विता मध्यमा जगौ । रे! रे! ऽपसर दूरं(रे) त्वं, न व्याख्याहि निजान् गुणान् ॥ २३८ ॥ तयोक्तं चेद् गुणैरर्घे–स्तन्मत्तः काऽस्ति पण्डिता ? । गीततालानहं वेद्मि, कार्यौत्सुक्ये तु बुद्धिदा ॥ २३९ ॥ ताभ्यां तृतीया स्वगुणान्, पृष्टा प्रत्युत्तरं ददौ । देवपूजादि माङ्गल्यं, मदधीनं च चन्दनैः ॥ २४० ॥ ततः

कनिष्ठिका स्वीयं, शौर्यं दक्षत्वमालपद् । देहकष्टे सहे च्छेदं, वर्त्तेऽङ्कगु(ग)णने धुरि ॥ २४१ ॥ सत्यश्चतस्रोऽपि वयं, प्रत्येकं गुणभूषिकाः । अङ्गुष्ठः किं च तनुते, निकटस्थोऽतिमन्थरः ? ॥२४२॥ रे ! रेऽहं भवतां भर्ता, वि(ब)भाषे स क्रुधाऽरुणः । मत्सामीप्याद् विना यूयं, कुरुध्वं कवलादिकम् ॥ २४३ ॥ एवमालोच्य निर्वाच्य–मङ्गुल्योऽङ्गुष्ठकोऽपि च । स्वस्मिन् स्वस्मिन् गुणं वीक्ष्य, समवायान्न चैक्य(क)तः ॥२४४॥ लुलित्वाऽलि(लं) मिलित्वा च, सङ्घेन परस्परम् । स्वसार्थे प्रार्थयामासुः, समुदायोजयस्त्विति ॥२४५॥ एवमाहत्य दृष्टान्तं स्पष्टान्तं निजदेहजम् । चातुर्यधुर्यधीर्धर्म–चातुर्यमभितश्चरेत् ॥ २४६ ॥

निशाम्य स्वभवं पूर्वं, मृगाङ्क ! त्वमथो पृथु । यतस्ते यतते शुद्ध–धर्मधीरत्यधीश्वरी ॥ २४७ ॥ अस्मिन्नेवाभवत् क्षेत्रे धन्यग्रामे पुरे वरे । दरिद्रमुद्रानिर्निद्रः, क्षत्रियो हंसपालकः ॥ २४८ ॥ तस्य भार्या गुणैरर्या, नाम्ना लीलावतीति च । सकलत्रः स दुःस्थोऽपि, गृहस्थत्वाय कल्पते ॥ २४९ ॥ अन्यदाऽऽपृच्छय वात्सल्यात्, प्रियवाचा निजप्रियाम् । धनार्जनाय सोऽचालीद् दूरदेशान्तरं प्रति ॥ २५० ॥ सकलं भूतलं भ्रान्त्वा, सोऽलब्ध्वाऽर्थमपि क्वचित् । पुनर्निर्विण्णचेतस्त्वाद्, ववले स्वगृहं प्रति ॥ २५१ ॥ मार्गमध्यमथागच्छन्नन्यदा क्वापि कानने । बिल्ववृक्षे प्ररोहं स, ददर्श विममर्श च ॥ २५२ ॥ यदौषधस्य कल्पेऽस्ति, ' द्रु(ध्रु)वं बिल्व–पलाशयोः । प्ररोहरोहणादास्ते, तदधो धनम् ' इत्यदः ॥ २५३ ॥ स्मृत्वैतद्वचनं स्मृत्यो–च्चखानावनिमुन्मनाः । ततो लेभे महारम्भा–देकर्कं हेमटङ्ककम् ॥ २५४ ॥ ततो विशेषतोऽन्वेष, विखिन्नात्ममनाः पुनः । गृहमागत्य सत्येन, तत् तत्पत्न्यै न्यवेदयत् ॥ २५५ ॥ सा तूत्तमस्वभावत्वात्, प्रासं प्रास्यमव्ययम् । प्रियार्थं परमान्नं त्व–पक्व भक्तिमती सती ॥ २५६ ॥ अत्रान्तरे तयोर्गेहे, भोजनायोद्यतात्मनोः । मुनिः कोऽपि समायासी–न्मासक्षपणपारणी ॥२५७॥ दृष्ट्वा स भावनादृष्ट्या, प्रत्यलाभि

शुभाशयः। प्रतिलेभे मुनिः सोऽन्नं, धर्मलाभाशिषा तुषम् ॥२५८॥ गते मुनौ निजस्थानं, ताभ्यामित्यवधारितम्। अहो ! आवाभ्यामेतत् किं, क्षीरान्नं मुनये ददे ? ॥ २५९ ॥ प्राक् पश्चात्तापमाप्यान्तः, पुनर्भावः स्थिरो दधे। शुभाशुभस्वभावेना–ऽभवत् कर्म शुभाशुभम् ॥ २६० ॥ युग्मम् । धर्मं सम्यक् समाराध्य, तदनालोच्य किञ्चन । सौधर्मकल्पे जज्ञाते, तौ समेतौ सुरोत्तमौ ॥ २६१ ॥ तत्र चित्रो(त्रो)चितं सौख्य–मनुभूयोत्तरोत्तरम् । ततश्च्युत्वाऽवतीर्येह, मृगाङ्कस्त्वं भवेऽभवः ॥ २६२ ॥ त्वदीया दयिता जाता, सेयं पद्मावती बत । पुनः प्राग्जन्मसम्बद्धौ, भवन्तौ भवतः स्म तौ ॥ २६३ ॥ एवं भावविपर्यास–वृत्तं प्रवच्म्ये द्वयोः भवन्तावभिजानीतां, तदिदं कर्मणः फलम् ॥ २६४ ॥ प्रतिबुद्धौ ततस्तौ तु, जातजातिस्मृती इव । शुद्धधर्मचिकीर्षायै, स्पृहयालूत्तमात्मकौ ॥ २६५ ॥ ततो गुरोर्गिराऽऽराध्य, श्रद्धाश्राद्धत्वमाप्य तौ । तदन्ये भद्रकोपज्ञा, जज्ञिरे श्रीजिनाज्ञया ॥ २६६ ॥ युग्मम् ॥ तद्भवे प्रतिपद्यापि, शुद्धधर्ममनश्वरम् । लेभिरेऽच्युतदेवत्व–मिन्द्रत्वाद्युतसद्रमम् ॥ २६७ ॥ च्युत्वा ततः पुनरवाप्य कुले सुजन्म, सन्मानवं सततसङ्गतबोधिबीजम् । कैवल्यमाप्य जिनधर्मगुरूपदिष्टं, प्राप्स्यन्ति मुक्तिकमलाममलामनन्ताम् ॥२६८॥

इति भाव–भावदानधर्मकर्मणि श्रीमृगाङ्ककथा ॥

हंसपाल–मृगाङ्कस्य, देशनाऽन्तः कथामिमाम् । भावे भावे निशम्याथ, प्रथमानस्ववासनम् ॥२६९॥ देशनान्ते तु धन्येन, मिलत्प्राञ्जलिनाऽलिके । विज्ञप्तिर्विदधे साधो !, शोधिसद्बोधिसिद्धये ॥ २७० ॥ युग्मम् ॥ भगवन् ! कर्मणा केन, प्राक्तनेन दुरात्मना। भ्रातरोऽमी समीपस्था, दुःस्थास्ते मेऽग्रजा अपि ॥ २७१ ॥ व्यवसायधृतायासा, गुणवद्वणिजोऽनणु । न तादृग् धनमासेदु–र्मेदुरात् कर्मणः कुतः(दुरोदरपरा इव)? ॥२७२॥ सूरीन्द्रः प्राह निस्तन्द्रा,भो भद्र ! श्रूयतामथ। कथ्यमानं यथातथ्यं,त्वत्पृष्टस्योत्तरं वरम्

॥ २७३ ॥ एतैरादिभवे दानं, ददे यतिनि यत् परम् । भावाविर्भावविकलं, सकलं तत् कलङ्कवत् ॥ २७४ ॥ तथाहि कथ्यते
कथ्यं, श्रूयतां तद्भवान्तरम् । ग्रामे क्वापि पुराऽभूवन्, स्नेहेद्धा बान्धवास्त्रयः ॥ २७५॥ कुतश्चित् कर्मणः प्राच्या-दवाच्या ज्ञानिना
विना । दारिद्र्यं नात्यजत् तत्कं, सदौकः स्नेहभागिव ॥ २७६ ॥ दारिद्र्यविद्रुतास्ते तु, हेतुकेतुनिराकृताः । प्रासादा इव निर्देवा-
श्चकासन्ते न किञ्चन ॥ २७७ ॥ निर्द्रव्यो दीव्यति प्रायो, न च चञ्चापुमानिव । चञ्चाना नु विनोदाय, मुत्प्रमोदाय निर्धनः
॥ २७८ ॥ त्रयोऽपि भ्रातरस्ते हि, नैहितं क्वापि लेभिरे । काष्ठान्यानीय कष्टेन, चेष्टन्ते काननाननात् ॥ २७९ ॥ चतुष्पथे
कथञ्चित् ते, काष्ठविक्रयनिष्क्रयाः । पोषयन्ति कुटुम्बं स्वं, ' विडम्बः खलु कर्मजः ' २८० ॥ काष्ठेभ्यस्तेऽन्यदा प्रापु-रटवीं
स्फुटशम्बलाः । भरानाभृत्य तत्कुरथाद्, बभूवुश्च बुभुक्षवः ॥ २८१ ॥ सम्भूयाह्वाय मध्याह्ने, त्रयो भोक्तुमुपाविशन् । तरोरधस्तु
कस्यापि, छायाश्रयमभीप्सवः ॥ २८२ ॥ युग्मम् ॥ तत्राप्यमात्रपुण्येना-रण्ये तेषां तु तस्थुषाम् । प्राप तापाम्बुदस्पन्दः, कन्दो
धर्मतरोरिव ॥२८३॥ मासोपवाससंवासः, सदीर्यासमितिस्थितिः । पारणाकारणा[त्] क्षामः, क्षमासारमुनीश्वरः ॥२८४ ॥ युग्मम् ॥
मुनिमालोक्य तं वाक्य-प्रमोदामोदमेदुरम् । जहृषुस्ते प्रकर्षेण, कर्षुका इव वर्षणम् ॥ २८५ ॥ मुदमादधिरे दातुं, सामुदायिक-
शम्बलम् । तेऽहम्पूर्विकया चेद-भवुस्तस्मै सदुत्सवम् ॥ २८६ ॥ तदादाय गते साधौ, समाधौ वा सुधानिधौ । कुमुदानीव ते
भेजु-र्भावसङ्कोचशोच्यताम् ॥ २८७ ॥ पश्चात्तापमवापुश्चे-त्ययं लात्वाऽगमद् वृथा । कुतोऽकस्मादिहागाच्चा-ऽस्माकमातङ्कपङ्कवत्
॥ २८८ ॥ न दायादो न सम्बन्धी, न गोत्री नात्र मैत्र्यवान् । न प्रातिवेश्मिकोऽस्माक-मस्मै तत् किं ददे तदा ? ॥ २८९ ॥
युग्मम् ॥ नायं निन्द्योऽथवा वन्द्यः, साधुर्माधुकरीं भ्रमन् । वयमेव पुनर्निन्द्या, येऽविमृश्य विधायिनः ॥ २९० ॥ सर्वं मुष्टाऽप्यटत्

साधु–लिप्सासिन्धुरितोऽधुना । वयं मूर्खाः क्षुधा शुष्का, भविष्यामो मुधाऽबुधाः ॥ २९१ ॥ पश्चात्तापोपसन्तापा–स्ते ययुर्निज-मन्दिरम् । तेन दानानुभावेन, किञ्चिच्च धनिनोऽभवन् ॥ २९२ ॥ भावादभावतो दानं, प्रायः पात्राय बोधये । ततः प्रदेयं तद्दानं, दानाद् भावोऽपि (वि)भाव्यते ॥ २९३ ॥ कदाचिदन्यदा ते तु, पात्रे दत्त्वाऽशनादिकम् । सानुतापाः पुनश्चासन् , भवितव्यप्रतोदिताः ॥ २९४ ॥ पूर्ववत् तादृशं दानं, दत्त्वा पात्रेऽनुतप्य च । धर्ममाराध्य धिक्श्रद्धं, सुश्रद्धं वा पुनः क्वचित् ॥ २९५ ॥ पूर्णीकृत्य तदायुस्ते, वयोऽस्ते वार्धके गताः । तत्तादृशनिजोपात्त–धर्माधर्मद्वयास्त्रयः ॥ २९६ ॥ स्वल्पर्द्धिव्यन्तरावास–मासेदुरुदयास्तदम् । ' व्युप्यते यादृशं क्षेत्रे, तादृशं फलमाप्यते ' ॥ २९७ ॥ व्यन्तरायुरपि प्रान्त्य, ततश्च्युत्वा यथाक्रमम् । भ्रातरस्ते त्रयोऽभूवन् , भवतो भवतोऽत्र वे ॥ २९८ ॥ सुपात्रदानतः श्राद्ध–कुले ते धर्मसङ्कुले । त्रयः समुदपद्यन्त, विद्यमानास्तवाग्रजाः ॥ २९९ ॥ तत्तादृग्दान–भावाभ्या–मभ्यावृत्तिप्रवर्तितः । लक्ष्मीरेषामलक्ष्मीर्वा, विद्युद्वद्दर्शनाशदा ॥ ३०० ॥ लक्ष्मीः कादम्बिनीवालं, लीयते च विलीयते । पूर्वोपात्ताघवातौघ–भावाभावेन भूस्पृशाम् ॥ ३०१ ॥ कादम्बिनीव कमला कमलाचलाऽलं, सम्पद्यते सुखसमाश्रयसंश्रयाय । चेत् पूर्वकर्मभरुता स्फुरता नितान्त–मातन्यते भववता महता हताशम् ॥ ३०२ ॥ दानक्षेत्रधरा शुभा सुरतडित्–प्रोल्लासशश्वत्स्तुति–प्रत्युत्पन्नसद्‌र्जगर्जनमनः सत्केतका धान्यदः। भावाब्दोऽद्भुतश(स)स्यदः प्रतिपदं सम्पद्यते सम्पदे, पश्चात्तापमरुन्न चेद् गुरुतरं दूरं निरस्यन्न तम् ॥३०३॥ येऽन्येऽपि दात्वा (दत्त्वा) मुनिपुङ्गवेभ्यो, दानं तु पश्चादनुतापमापन् । ते दुःखदौर्गत्यगतिं लभन्ते, यथैव धन्यस्य सदग्रजास्ते ॥ ३०४ ॥ "दानं देयं सद्यथाशक्ति युक्त्या, भावो भाव्यो नव्यनव्यो विभाव्य । पश्चात्तापो नैव कार्यो निवार्यो, यस्मात् सर्वं निष्फलं स्यादलं तत् ॥ ३०५ ॥" उक्तं च—" दानं दत्त्वा ये मुनिभ्यस्तु पूर्वं,

शुभ्रा, गुणा वा च द्वितीयया ॥ ३२१ ॥ खण्डश्चाखण्डमाधुर्यो–ऽदायि ताभ्यां तृतीयया । प्राज्यमाज्यं चतुर्थ्या च, व्यतीर्यत
द्वितोर्जितम् ॥ ३२२ ॥ इत्थमेताभिरिभ्याभि–श्चतसृभिरतिप्रभम् । तत्तद्दानसमायोगाद्, भोगभृत् कर्म निर्ममे ॥ ३२३ ॥ "एवं
यो यत्र कुत्रापि, प्रस्तावौचित्यकृत्यवित् । दत्ते दानं मुदादानं, स स्यात् सर्वत्र भोगभृः" ॥ ३२४ ॥ हे सुभद्रे ! त्वया भद्रे !,
यन्मृद्वहनकर्म तत् । न्यबन्ध्यबन्धुरं किञ्चित्, तदाप्यथ शृणु प्रथम् ॥ ३२५ ॥ निर्वहन्ती वहन्ती च, काचिद् दासी तु गोमयम् ।
व्यजिज्ञपत् प्रपापात्रा, किञ्चित् त्वामिभ्यसत्प्रियाम् ॥ ३२६ ॥ त्वं तु प्रायः कृपापात्रा, तदा तां कर्मयोगतः । सतिरस्कार-
संस्कारमन्नवीरिति निष्ठुरम् ॥ ३२७ ॥ हे दासि ! कृतकर्माभि–र्भारं वहसि काऽसि च ? । तत् तदेव कुरुत्तालं, मौनमालम्ब्य
तद्वलम् ॥ ३२८ ॥ तेन सा वचसा दूनाऽऽयूना वाऽमक्ष्यभक्षणात् । तस्थुष्यधोमुखीभूय, भूयो भूयो हृदापदा ॥ ३२९ ॥
" किं करोति नरः प्रायः, पारतन्त्र्यनियन्त्रितः ? । नरकं प्राहुराचार्याः, पारतन्त्र्यमयन्त्रितम् ॥ ३३० ॥"
तेनानालोचिताघेन, निदाघेनेव तल्लिका । शालिभद्रानुजाऽपि च, वाहिता हन्त ! मृत्तिकाम् ॥ ३३१ ॥ " समर्थो वाऽस-
मर्थो वा, गर्वसर्वस्वपर्वतः । साहङ्कारो नरः कर्म, चिनोति ननु नीचकैः ॥ ३३२ ॥ ततो धर्मार्थिभिः किं वा, कर्मा-
र्थिभिरिहोत्तमैः । वचनेनाप्यहङ्कारः, कर्तव्यो न मनीषिभिः ॥ ३३३ ॥ " निशम्येति गिरं सूरे–र्निरस्तस्वान्तसंशयाः। विनम्य च
गुरुं तेऽथा–भूवन् वेश्म–यियासवः ॥ ३३४ ॥ इत्येवं संशयाद्रिं विषमतमगतिं मोहमालानुकूलं, भित्त्वा छित्त्वा च सम्यग्
जिनवचनलसद्देशना–पर्युपास्त्या । जात्याख्यानविधानाः स्थितवति महति श्रीगुराविन्द्रभद्रे, धन्याद्या भाविभद्रा निजनिजसदना-
न्यापुरात्तप्रबोधाः ॥ ३३५ ॥ धन्याख्यानमिदं विदम्भसुहृदः श्रुत्वा गुरोरादितः श्रीकीर्त्युत्तमसागरात् सुमनसामानन्दकन्दाम्बु-

दाः । भव्याः श्रीजिनधर्मशर्मकमलामालिङ्ग्य संसर्गतो, योग्या जिष्णुमनोरथाः पृथुपथा जग्मुर्जयानन्दताम् ॥ ३३६ ॥ आश्चर्यैश्चर्यवर्योर्जितसुकृतकृतः कान्तकान्ताभिरामः, कामोद्दामप्रधानः सुभगशुभगतेर्भोगभोगीन्द्रभद्रः । निस्तन्द्रः श्रीसमुद्रः सुषमसुखमयं कालमालम्बमानो, धन्यः पुण्यप्रभावादभवदतिघनी सौख्यनीतिप्रणीतिः ॥ ३३७ ॥ यथा यथावद्गुणराजिराज्य–विभ्राज्यमानस्य मनस्यवश्यम् । वैराग्यसङ्गः समगंस्त शस्तः, प्रियासुभद्राऽश्रुविलोकनेन ॥ ३३८ ॥ श्रुत्वा तदास्यादतिविस्मयश्रस्य–श्रीशालिभद्रस्य विरागभावम् । हास्यादपि स्वेन तदैव दैवादूरीचकार व्रतभारमारात् ॥ ३३९ ॥ तत् सर्वमुर्वीभविसुप्रसिद्ध–श्रीशालिभद्रस्य कथाप्रबन्धात् । ज्ञेयं तु विज्ञैरिति भूरिभावं, विभावनीयं च शिवाय भूयः ॥ ३४० ॥ व्रतदानात् पश्चाच्चरमजिननाथादवितथं, द्वयोः साध्वोर्धन्याभिधसुविधिशाल्योरनुकलम् । क्रियाकाण्डं चण्डं सदशमभवद् भावविभव–प्रभावप्राग्भारात् तदखिलसुखायास्तु सुधियाम् ॥ ३४१ ॥ किञ्चित् प्राच्यं सुवाच्यं किमपि नवमदो मोददं संविदाद्यं, किञ्चिज्ज्ञात्वा गुरूणामनणुगुणिमुखात् संमुखादागमोक्तेः । क्लृप्तं विज्ञप्तिरूपं निरुपममिति तयोः साधु साध्वोः प्रबोधात्, खेन्द्विष्विन्द्वाख्यवर्षे[ १५१० ] बहुलशुदिरविथित्रयोदश्याम् ॥ ३४२ ॥ श्रीवज्रशाखासुखसान्द्रचान्द्र–कुले विशालेऽस्ति सुधर्मनाम्नः । श्रीवर्धमानान्वयवंशरत्नं, जिनेश्वरः सूरिरभूत् प्रभाभूः ॥ ३४३ ॥ श्रीविक्रमार्कान्नृपतेः पयोधि–द्वि-खेन्दुवर्षे[१०२४१]ऽणहिलाह्वपुर्याम् । श्रीदुर्लभाधीशसदस्युदारं, दधे, विधिं खारतराख्यमुख्यम् ॥ ३४४ ॥ बभूव तस्माज्जिनचन्द्रसूरि–पट्टोत्कटाभोऽभयदेवसूरिः । नवाङ्गवृत्तिर्विवृतेस्ततान, यः सर्वशोभां जिनशासनाङ्गम् ॥ ३४५ ॥ तदीयपट्टोदयभूधराग्र–सहस्ररश्मिस्तमसां प्रणाशी क्रियाप्रधानाद्भुतधीनिधीशः, सूरीश्वरः श्रीजिनवल्लभाह्वः ॥ ३४६ ॥ ततो बभूवातिभवो नवोद्यद्योगीन्द्रचूडामणिरस्ततन्द्रः ।

युगप्रधानो धरणेन्द्रदत्तो, वरो वरीयान् जिनदत्तसूरिः ॥ ३४७ ॥ तस्यानुजः(गः) श्रीजिनचन्द्रसूरि–स्तत्पट्टभूभृज्जिनपत्तिसूरिः । पट्टे तदीयेऽप्युदयाय भूरि–र्जिनेश्वरः सूरिगुरुर्बभूव ॥ ३४८ ॥ जिनप्रबोधोऽपि तदाप्तबोधो, वादीन्द्रमुद्रादिमयुद्रचन्द्रः । ततोऽपि च श्रीजिनचन्द्रसूरि–स्तस्माज्जिनाग्रे कुशलस्तु सूरिः ॥ ३४९ ॥ जज्ञे ततः श्रीजिनपद्मसूरि–रस्मात् सलब्धिर्जिनलब्धिसूरिः । तदग्रतः श्रीजिनचन्द्रसूरिर्जिनेश्वरः सूरिरितः प्रतापी ॥ ३५० ॥ ततोऽपि च श्रीजिनशेखराख्य–स्ततोऽस्ति स श्रीजिनधर्मसूरिः । प्रज्ञाप्रकर्षाद्धुतदेवसूरिः, सौजन्यपुण्यादिगुणांशुभूरिः ॥ ३५१ ॥ तदीयपादाम्बुजराजहंसः श्रीकीर्तिसत्सागरसूरिशिष्यः । आचार्यमिश्राप्तपदानुसारी, सूरिर्जयानन्दसदाख्यया युक् ॥ ३५२ ॥ पारस्कराख्ये नगरे गरीयः-श्रीगूडरादीश्वरतीर्थसारे । श्रीवीर-पार्श्वाजितचैत्यचित्रे, व्यधायि धन्यस्य चरित्रमेवम् ॥३५३॥ इति धन्यमहापुण्य–नररत्नशिरोमणेः । जिनधर्म–जयानन्दः, प्रस्तावः पञ्चमोऽस्त्वयम् ॥ ३५४ ॥

इति श्रीधन्यचरित्रे सद्गुरुप्राप्ति–भावाभावदानमृगाङ्ककथाकथनश्रवण–पूर्वभवसन्देहापोह–धर्मरङ्ग–वैराग्यरङ्गलाभादिवर्णनो नाम पञ्चमः प्रस्तावः सम्पूर्णः ॥ ५ ॥

## [ धन्यचरित्र–कथाकृत्–प्रशस्तिः— ]

वामेयमीशमनिशं मनसा नमामि, वाचा तथैव वपुषः प्रभया भजामि। श्रीनिश्चलं सुखपुर्यं शरणागतानां, श्रीशं विशेषसुषमासु-
पर्मं गुणानाम् ॥१॥ पार्श्वदेव ! वरं देहि, पावनेशं सदैव हि । भावशश्वत्तानेक–भावसङ्गव्यमोदकम् ॥२॥ श्वद्वलगुच्छत्रयुग्मम् ।
वर्षे ख–विधु–बाणेन्दु [ १५१० ] सम्मिते मासि मार्गवे (के) । शुदिद्वितीया–गुर्वाख्यवारेऽलेखीदमद्भुतम् ॥ १ ॥ श्रीम-
त्पारस्करे मञ्जु–कोष्ठे श्रीसङ्घसङ्कुले । श्रीसोदावंश्यश्रीभीम–राज्ये प्राज्ये श्रिया भिया ॥१॥ श्रीमत्खरतराह्वान–गच्छे स्व-
च्छश्रियाऽऽश्रिते । श्रीजिनचन्द्रसूरीन्द्र–सन्ताने साधुबन्धुरे ॥ २ ॥ श्रीजिनेश्वरसूरीश–पदेऽभूज्जिनशेखरः । तत्पट्टे
प्रक्टाः सन्ति, श्रीजिनधर्मसूरयः ॥ ३ ॥ तत्पादपद्महंसेना–चार्येण विधुपक्षिणा । जयानन्देन श्रीपार्श्व–प्रसादाल्लिखितं
मुदे ॥ ४ ॥ यावद् धरा सुरधरः सरविर्विधुश्च, तारागणो ध्रुवनिबद्धगतिः सदाऽस्ति । स्वर्भूर्भुवस्त्रयमिदं किल यावदेव, श्रीपार्श्वचैत्य-
मपि नन्दतु तावदेव ॥ ५ ॥ अस्मिश्चैत्यवरे सुरेश्वरनतश्रीपार्श्वतीर्थोत्तरे, श्रीसङ्घेन चतुर्विधेन सुजनैरन्यैरपि प्राञ्जलैः । कार्या
शुद्धिरधीश्वरी शुभकरी पूजा नतिश्चोन्नतिः, सर्वश्रीसमुदायिभिः खरतरैरैक्यं विलोक्यं श्रिये ॥ ६ ॥

इति प्रशस्तिः ।

[ प्राप्तप्रतिप्रान्तोल्लेखः ]

संवत् १५४८वर्षे श्रावणसुदित्रयोदशीसोमे श्रीखरतरगच्छे श्रीजिनेश्वरसूरिसन्ताने श्रीजिनधर्मसूरिपट्टालङ्कारचूडामणि-श्रीजिनचन्द्रसूरिवराणां वाचनाय पं० कीर्त्तिहंसमुनिना श्रीधनाढ्यगुणचित्रं चरित्रमलेखि श्रीजेसलमेरुमहादुर्गे चिरं नन्दतु॥

न मुञ्चन्ते चेतः प्रतिदिवसमस्माकमखिलं, गुणा यौष्माकीनाः शशिकिरणसंवादनिपुणाः ।
न यौष्माकीनं नाम प्रतिदिनमनुत्कीर्त्य नियतं, स्वचित्ते विन्दामः कथमपि समाधानघटनम् ॥ १ ॥

इति गुणगणोदारश्रीधन्यसाधुचरित्रमिदम् ॥

समाप्तम्

सूरीश्वरो विजयते सुकृपादिचन्द्रः, शिष्योऽस्ति तस्य सुखसागरपाठको यः ।
तस्याऽऽज्ञया लिखितवान् सुरते सुरम्यां, सुश्रावको विजयचन्द्र इमां प्रतिं तु ॥ १ ॥

संवत् १९९२ वर्षे प्रथमभाद्रपदे पर्युषणपर्वान्तर्गतश्रीमहावीरजन्मवाचन—महोत्सवदिने
पूर्णीकृतेयं लिखित्वा श्रावकविजयचन्द्रेण । शुभं भवतु ॥

# विषयानुक्रमः

# सुभाषित–विषय–सूची ।

श्रीजिनदत्तसूरिपुस्तकोद्धारक फण्ड [ ग्रन्थांक ४१ ]

खरतरगच्छीयजैनाचार्यश्रीजयानन्दसूरिनिर्मितम्

# धन्यचरितम् ।

जैनाचार्यश्रीजिनकृपाचन्द्रसूरिशिष्योपाध्यायमुनिसुखसागरसदुपदेशात्

सुरतनिवासिनः 'शा० भीखाभाई धर्मचन्द्र' इत्यस्य, नवापुरासङ्घस्य,

मलकापुरनिवासिन्याः सुश्राविकायाश्च द्रव्यसाहाय्येन प्रकाशितम् ।





गान्धीत्युपाख्येन भगवानश्रेष्ठितनुजेन पण्डितलालचन्द्रेण संशोधितम् ।

वीरनिर्वाणसंवत् २४६४ ] प्रथमावृत्तिः ९०० [ वि. सं. १९९४